केन कर्मविपाकेन सर्वप्राधान्यमर्हति । [ 870 ]
स चापि दण्डयन्मर्त्यान्मर्षयन्विधमन्नपि ।
प्रेत्यभावे कथं लोकाँल्लभते पुण्यकर्मणाम् ।
राजवृत्तमहं तस्माच्छ्रोतुमिच्छामि मानद ।
महेश्वरः ।
तदहं ते प्रवक्ष्यामि राजधर्मं शुभानने ।
राजायत्तं हि तत्सर्वं लोकवृत्तं शुभाशुभम् । [ 875 ]
महत्तत्तपसो देवि फलं राज्यमिति स्मृतम् ।
तपोदानमयं राज्यं परं स्थानं विधीयते ।
तस्माद्राज्ञः सदा मर्त्याः प्रणमन्ति यतव्रताः ।
न्यायतस्त्वं महाभागे श्रोतुकामासि भामिनि ।
तस्मात्तस्यैव चरितं जगत्पथ्यं शृणु प्रिये । [ 880 ]
अराजके पुरा त्वासीत्प्रजानां संकुलं महत् ।
तद्दृष्ट्वा संकुलं ब्रह्मा मनुं राज्ये न्यवेशयत् ।
तदाप्रभृति संदृष्टं राज्ञां वृत्तं शुभाशुभम् ।
तन्मे शृणु वरारोहे तस्य पथ्यं जगद्धितम् ।
यथा प्रेत्य लभेत्स्वर्गं यथा धीर्यं यशस्तथा । [ 885 ]
पित्र्यं वा भूतपूर्वं वा स्वयमुत्पाद्य वा पुनः ।
राजधर्मेनुष्ठाय विधिवद्भोक्तुमर्हति ।
आत्मानमेव प्रथमं विनयैरुपपादयेत् ।
अनु भृत्यान्प्रजाः पश्चादित्येष विनयक्रमः ।
स्वामिनं चोपमां कृत्वा प्रजास्तद्वृत्तकाङ्क्षया । [ 890 ]
स्वयं विनयसंपन्ना भवन्तीह शुभेक्षणे ।
तस्मात्पूर्वतरं राजा आत्मानं विनये नयेत् ।
यो विनीतः स्वयं राजा विनयत्येव वै प्रजाः ।
अपहास्यो भवेत्ताद्दक्स्वदोषस्यानवेक्षणात् ।
विद्याभ्यासैर्वृद्धयोगैरात्मानं विनयं नयेत् । [ 895 ]
विद्या धर्मार्थफलिनी तद्विदो वृद्धसंज्ञिताः ।
इन्द्रियाणां जयो देवि अत ऊर्ध्वमुदाहृतम् ।
अजये सुमहान्दोषो राजानं विनिपातयेत् ।
पञ्चैव स्ववशान्कृत्वा तदर्थान्पञ्च शोषयेत् ।
षड्‌ सृज्य यथायोगं ज्ञानेन विनयेन च । [ 900 ]
शास्त्रचक्षुर्नयपरो भूत्वा भृत्यान्समाहरेत् ।
वृत्तश्रुतकुलोपेतानुपधाभिः परीक्षितान् ।
अमात्यानुपधातीतान्मापसर्पाञ्जितेन्द्रियान् ।
योजयेत यथायोगं यथार्हं स्वेषु कर्मसु ।
अमात्या बुद्धिसंपन्ना राष्ट्रं बहुजनप्रियम् । [ 905 ]
दुराधर्षं पुरश्रेष्ठं कोशः कृच्छ्रसहः स्मृतः ।
अनुरक्तं बलं सारमद्वैधं मित्रमेव च ।
एताः प्रकृतयः षट् च स्वामी च नयतत्त्ववित् ।
प्रजानां रक्षणार्थाय मर्यमेतद्विनिर्मितम् ।
आभिः करणभूताभिः कुर्याल्लोकहितं नृपः । [ 910 ]
आत्मरक्षा नृपेन्द्रस्य प्रजारक्षार्थमिष्यते ।
तस्मात्सततमात्मानं संरक्षेदप्रमादवान् ।
भोजनाच्छादनात्स्नानाद्बहिर्निष्क्रमणादपि ।
नित्यं स्त्रीगणसंयोगाद्रक्षेदात्मानमात्मवान् ।
स्वेभ्यश्चैव परेभ्यश्च शस्त्रादपि विषादपि । [ 915 ]
सततं पुत्रदारेभ्यो रक्षेदात्मानमात्मवान् ।
सर्वेभ्य एव स्थानेभ्यो रक्षेदात्मानमात्मवान् ।
प्रजानां रक्षणार्थाय प्रजाहितकरो भवेत् ।

— *Adhy no* D10 T2 3 G2 3 194, T1 M4 187, G1 3 M1 188, M2 3 189 — (L 865) T1 नहान्व (for ननृनुष्य) T1 त्रिनेत्र, T2 G3 लक्ष मो, G1 नाग (for त्रियक्ष) — T1 om lines 866–867 — (L 868) G1 3 मनुष्येषु (for मानुषेषु) D10 T G [ट]ह (for [ष]व) — (L 869) S (except M1-3) -प्राण (for -पाणि) T1 शिरस्नाद् (for -शिरःकायौ) — G2 om lines 870–873 — (L 871) T1 मदा (for म च) D10 दह षान् (for °यन्) D10 T2 3 G4 विविधान् (for विधनन्) — (L 872) G3 M1-3 कर्मणा (for °णाम्) — G1-3 om the ref T1 महेश (for °श्वर) — (L 874) T1 मनानन (for शुभानन) — (L 875) D10 यत् (for तत्) — T1 om lines 876–879 — (L 877) T2 तपोदानमयारम्भ (for the prior half) — (L 879) D10 श्रोतुमिच्छामि भामिनि (for the post half) — With lines 881–882, cf Manu 7 3 — (L 882) T2 3 G1 3 4 M1 3 4 न (for तद्) D10 G2 4 न्यवेदयत् (for °शयत्) — (L 892) T2 3 G2-4 स्वस्मात् (for त°) D10 T2 3 G विनयत्येव वै (G4 ते) प्रजा, M1-3 त्वात्मानं विनयं नयेत् (for the post half) — D10 T G om line 893 M1 om (hapl) lines 893–895 — (L 894) M2 3 [अ]नपेक्षणात् (for [अ]नवे°) — (L 897) D10 T2 G उदाहृत (for °हृतम्) — (L 899) D10 T2 3 G स्ववशे (for शान) — (L 900) D10 -योगाद् (for -योग) — (L 901) T3 समाचरेत् (for °हरेत्) — (L 903) D10 T2 3 G1-3 सोपसर्पा(T2 G2 °वा)न् (for मापसर्°) — (L 904) T2 3 तथायोग (for यथा°) — (L 905) G2 अमात्यान्बुद्धिसंपन्नान् (for the prior half) — (L 906) G1 3 पुर, G2 वर (for पुर-) G4 कृच्छ्रतर (for °सह) T2 कोशा कृच्छ्रसहा स्मृता (for the post half) — (L 907) D10 T2 3 G M4 सान्नाम् (for सारम्) G मत्रम् (for मित्रम्). — (L 908) D10 T2 3 G M4 स्वेषु (for षट् च) D10 T3 G विनय, T2 विषय- (for च नय) — (L 911) T2 3 G M4 नरेन्द्रस्य (for नृपेन्द्रस्य) — (L 913) T2 3 भोजनाच्छादनस्नानाद् (for the prior half) — (L 917) After

प्रजाकार्यं तु तत्कार्यं प्रजासौख्य तु तत्सुखम् ।
प्रजाप्रिय प्रिय तस्य स्वहित हि प्रजाहितम् । [ 920 ]
प्रजार्थे तस्य सर्वस्वमात्मार्थे न विधीयते ।
प्रकृतीना विवादार्थे रागद्वेषौ व्युदस्य च ।
उभयो पक्षयोर्वाद श्रुत्वा चैव यथातथम् ।
तमर्थं विमृशेद्बुद्ध्या स्वयमा तत्त्वदर्शनात् ।
तद्विद्भिर्बहुभिर्वृद्धै सहासीनो नरोत्तमै । [ 925 ]
कर्तारमपराधं च देशकालौ नयानयौ ।
ज्ञात्वा सम्यग्यथाशास्त्र ततो दण्ड नयेन्नृपु ।
एव कुर्वँल्लभेद्धर्मं पक्षपातविवर्जनात् ।
प्रत्यक्षाप्तोपदेशाभ्यामनुमानेन वा पुन ।
बोद्धव्यं सतत राज्ञा देशवृत्त शुभाशुभम् । [ 930 ]
चारै कर्मप्रवृत्त्या च तद्विज्ञाय विचारयन् ।
अशुभ निर्हरेत्सद्यो जोपयेच्छुभमात्मन ।
गर्ह्यान्विगर्हयेदेव पूज्यान्सपूजयेत्तथा ।
दण्ड्याश्च दण्डयेद्देवि नात्र कार्या विचारणा ।
पक्षापेक्ष सदा मन्त्र कुर्याद्बुद्धियुतैर्नरै । [ 935 ]
कुलवृत्तश्रुतोपेतैर्नित्य मन्त्रपरो भवेत् ।
कामरागेण वै मूर्खैर्नैव मन्त्रमना भवेत् ।
राजा राष्ट्रहितापेक्ष सत्यधर्माणि कारयेत् ।
सर्वोद्योग स्वय कुर्याद्दुर्गादिषु सदा नृप ।
देशवृद्धिकरान्भृत्यानप्रमादेन कारयेत् । [ 940 ]
देशक्षयकरान्सर्वान्संप्रियानपि वर्जयेत् ।
अहन्यहनि सपश्येदनुजीविगण स्वयम् ।
सुमुख सुप्रियो भूत्वा सम्यग्वृत्त समादिशेत् ।
अधर्म्यं परुषं तीक्ष्ण वाक्य वक्तु न चार्हति ।
नरे नरे गुणान्दोषान्सम्यग्वेदितुमर्हति । [ 945 ]
स्वेङ्गित वृणुयाद्धैर्यान्न कुर्यात्क्षुद्रसविदम् ।
परेङ्गितज्ञो लोकज्ञो भूत्वा ससर्गमाचरेत् ।
स्वतश्च परतश्चैव परस्परभयादपि ।
अमानुषभयेभ्यश्च स्वा प्रजा पालयेन्नृप ।
लुब्धा कठोराश्चाध्यक्षा मानवा दस्युवृत्तय । [ 950 ]
निग्राह्या एव ते राज्ञा संगृहीता यतस्तत ।
कुमारान्विनयैरेव जन्मप्रभृति योजयेत् ।
तेषामात्मगुणोपेतं यौवराज्ये नियोजयेत् ।
प्रकृतीना यथा न स्याद्राज्यभ्रशोद्भव भयम् ।
एतत्सचिन्तयन्नित्य तद्विधान तथार्हति । [ 955 ]
अराजक क्षणमपि राष्ट्र न स्याद्धि शोभने ।
आत्मनोऽनुविधानाय यौवराज्य सदेष्यते ।
कुलजाना च वैद्याना श्रोत्रियाणां तपस्विनाम् ।
अन्येषा वृत्तयुक्ताना विशेष कर्तुमर्हति ।
आत्मार्थं राज्यतन्त्रार्थं कोशसचयमारभेत् । [ 960 ]

---

the prior half, $T_3$ ins

कामक्रोधभयादपि ।
सतत परदारेभ्यो

— ( L 920 ) $D_{10}$ $T_3$ $G_{3.4}$ प्रियाप्रिये ( for प्रजाप्रिय ) $D_{10}$ $T_{2.3}$ $G_{3.4}$ तु ( for हि ) — ( L 922 ) $D_{10}$ $T_2$ G हि ( $G_4$ च ) रक्षार्थं, $T_3$ रक्षणार्थं ( for विवादार्थे ) — ( L 923 ) $T_2$ वादान् ( for वाद ) — ( L 925 ) $D_{10}$ $T_{2.3}$ G तत्त्वविद्भिश्च बहुभिर् ( for the prior half ) $G_1$ वृद्धै सह, $G_3$ वृद्धैर्मत्री ( for सहासीनो ) — ( L 931 ) $T_2$ च कर्म ( for कर्मप्र ) $T_{1.2}$ G विचारयेत् ( for °रयन् ) $T_3$ तद्विज्ञाय विचारयेत् ( for the post. half ) — ( L 932 ) $T_1$ $G_{3.4}$ अशुभान् ( for °भ ) — $T_1$ om. 933–939 — ( L 935 ) $T_2$ बुद्धिहितैर्, $T_3$ °युतो ( for °युतैर् ) — ( L 936 ) $G_{1.3}$ -तपोपेतैर् ( for श्रुतो° ) — ( L 937 ) $D_{10}$ $T_{2.3}$ G कामकारेण वै मूर्खैर् ( for the prior half ) $D_{10}$ [ए]व, $G_2$ च ( for [ए]व ) $G_{1.3}$ मन्त्रपरो ( for °मना ) — ( L 938 ) $T_{2.3}$ G हितापेक्ष ( for °पेक्ष ) $M_4$ -कर्माणि ( for -ध° ) — $T_3$ transp lines 939 and 940 — ( L 939 ) $T_2$ सदा ( for स्वय ) $D_{10}$ $T_{2.3}$ G नृपु ( for नृप ) — ( L 940 ) $G_{1.2.4}$ $M_4$ देशवृत्ति ( for °वृद्धि- ) $D_{10}$ यत्नान्, $T_1$ विप्रान् ( for भृत्यान् ) $G_4$ न प्रमादेन ( for अप्र° ) $D_{10}$ $G_2$ अप्रियांश्च विवर्जयेत् ( for the post half ) — $T_3$ reads line 941 twice — ( L 941 ) $G_{1.3}$ -प्रियकरान् ( for -क्षय° ) $T_1$ विप्रान् ( for सर्वान् ) $T_1$ सु- ( for स ) $T_2$ चापि ( for अपि ) $D_{10}$ $T_3$ ( both times ) G अप्रियाश्च विस( $T_3$ [ first time ] °व )र्जयेत् ( for the post. half ) — $T_1$ om line 943 — ( L 943 ) $D_{10}$ $T_{2.3}$ $G_{2-4}$ $M_4$ दत्त्वा ( for भूत्वा ) $T_3$ वृत्ति ( for वृत्त ) $D_{10}$ $T_{2.3}$ G $M_4$ समाचरेत् ( for °दिशेत् ) — After line 944, $T_{2.3}$ G ins

असविश्वास्य वचन वक्तु सत्सु न चार्हति ।

[ $T_3$ विश्वस्य ( for -विश्वास्य ) $T_2$ $G_4$ अस्य विश्वस्य वचन ( for the prior half ) ]

— ( L 945 ) $G_{1.2}$ नयो, $G_3$ समो ( for सम्यग् ) — ( L 946 ) $T_1$ स्वहित ( for स्वेङ्गित ) $T_1$ -सगति ( for -सविदम् ) — ( L 947 ) $D_{10}$ $T_3$ G लोकेषु; $T_2$ भूतेषु ( for लोकज्ञो ) — ( L 950 ) $D_{10}$ लुब्धान्, $G_{3.4}$ वृद्धा ( for लुब्धा ) $D_{10}$ $T_{1.3}$ G $M_4$ चाप्यस्य, $T_2$ हीनाश्च ( for चाध्यक्षा ) — ( L 951 ) $D_{10}$ T G $M_3$ सगृहीत्वा ( for °ता ) — ( L 953 ) $D_{10}$ $T_{1.3}$ G यौवराज्येन ( for °ज्ये नि- ) — ( L 954 ) $D_{10}$ $T_{2.3}$ G $M_4$ -भ्रशो भवेद् ( for भ्रशोद्भव ) — $T_1$ om line 955 — ( L 955 ) $T_2$ तदा ( for तथा ) — ( L 956 ) $D_{10}$ T G राज्य ( for राष्ट्र ) — ( L 957 ) $G_3$ -विनाशाय ( for विधानाय ) — ( L 959 ) $D_{10}$ $T_{2.3}$ $G_{3.4}$ वृत्ति- ( for वृत्त ). $T_1$

दुर्गाद्दुर्गान्समुद्दाय वणिग्भ्यः पुरपालयात् ।
परान्नगुणमारान्या भृत्यपोषणमाचरेत् ।
वाहनानां विधायाग्रे पोषणं योधकर्मसु ।
सादरं सततं भूत्वा अवेक्षाव्रतमाचरेत् ।
चतुर्धा विभजेत्कोशं धर्मभृत्यात्मकारणात् । [965]
आपदर्थं च नीतिज्ञो देशकालवशेन तु ।
अनाथान्व्याधितान्वृद्धान्स्वदेशे पोषयेन्नृप ।
संधिं च विग्रहं चैव तद्विशेषांस्तथापरान् ।
यथावत्संविमृश्यैव बुद्धिपूर्वं समाचरेत् ।
सर्वेषां स प्रियो भूत्वा मण्डलं सततं चरेत् । [970]
शुभेष्वपि च कार्येषु न चैकोऽन्तं समाचरेत् ।
स्वतश्च परतश्चैव व्यसनानि विमृश्य तु ।
परेण धार्मिकान्न्यायाज्ञातीयाद्बहुपन्नोभव ।
रक्ष्यत्वं वै प्रजाधर्मः क्षत्रधर्मस्तु रक्षणम् ।
कुनृपैः पीडितास्तस्मात्प्रजाः सर्वत्र पालयेत् । [975]
यात्राकालमवेक्ष्यैव पश्चात्कोपं फलोदयम् ।
बहुत्वाच्चापदश्चैव प्रागयानादिति चिन्तयेत् ।
व्यसनेभ्यो बलं रक्षेन्नयतो व्ययतोऽपि वा ।
आपदो वर्जयेद्युद्धं प्राणरक्षणकारणात् ।
कारणादेव योद्धव्यं नात्मनः परदोषतः । [980]
सुयुद्धे प्राणमोक्षश्च तस्य धर्माय दृश्यते ।
अभियुक्तो बलवता कुर्यादापद्विधिं नृपः ।
अनुनीय तथा सर्वान्प्रजानां हितकारणात् ।
अन्यप्रकृतियुक्तानां राज्ञां वृत्तविचारिणाम् ।
अन्याश्चापत्प्रपन्नानां न तान्संयोक्तुमर्हति । [985]
शुभाशुभं यदा देवि वृत्तं तूभयतः स्मृतम् ।
आत्मैव तच्छुभं कुर्यान्नशुभं योजयेत्परान् ।
एवमुद्देशतः प्रोक्तमलेपत्वं यथा भवेत् ।
एतदेव समासेन राजधर्मं प्रकीर्तितम् ।
एवं संवर्तमानस्तु दण्डयन्मर्त्यमयन्प्रजाः । [990]
न किल्बिषमवाप्नोति पद्मपत्रमिवाम्भसा ।
एवं संवर्तमानस्य कालधर्मो यदा भवेत् ।
स्वर्गलोके तदा राजा त्रिदशैः सह तोष्यते ।
द्विविधं राजवृत्तं च न्यायभाग्यसमन्वितम् ।
एवं न्यायानुगं वृत्तं कथितं ते शुभेक्षणे । [995]
राज्यं न्यायानुगं नाम बुद्धिशास्त्रानुगं भवेत् ।
धर्म्यं पथ्यं यशस्यं च स्वर्ग्यं चैव तथा भवेत् ।
दैवपक्ष्ये सति नृपे राज्यं न्यायानुगं भवेत् ।
क्रियन्ते यत्र कर्माणि शास्त्रयुक्तिं विमृश्य वै ।
कर्ता द्वेषवियुक्तश्च तत्र न्यायानुगं भवेत् । [1000]
राज्यं भोगानुगं नाम अयथावत्प्रदृश्यते ।
तत्तु शास्त्रविनिर्मुक्तं सतां कोपकरं भवेत् ।

---

°क्षा (for विशेष) —(L 960) $M_1$ समार्थं (for °न्स्वार्थं) $D_{10}$ $T_{2.3}$ G कोशार्थं च समाचरेत् (for the post half) — $T_1$ om (hapl) lines 961–964 —(L 961) $D_{10}$ $T_2$ $G_{2.4}$ दुर्ग (for दुर्गाद्) —(L 962) $T_3$ दुरात्म (for प°) —(L 964) $M_4$ क्षोभां (for °क्षा°) —(L 965) $T_1$ चतुर्विधं कोशं (for the prior half) — $T_1$ om line 966 —(L 967) $T_{1.3}$ $G_{1.3.4}$ $M_{1.2}$ व्यथितान् (for व्याधि°) —(L 968) $T_1$ संधिविग्रहणं नैव यानासननयेव च —(L 969) $T_3$ G स (for स) $T_1$ भेदं विमृश्य विधिवद् (for the prior half) — $T_1$ $M_1$ om (hapl) line 971 —(L 972) $T_{2.3}$ G विमृश्यत, Kumbh. ed and Madras ed °श्य स° (for °श्य तु) —(L 973) $D_{10}$ G योगान्, $T_2$ लोकान् (for न्यायान्) $T_1$ प्रायेण धार्मिकन्यायान (for the prior half) $T_1$ कुर्याद् (for [अ]नीयाद्) — $T_1$ om (hapl) lines 976–977 —(L 976) $D_{10}$ $T_{2.3}$ $G_4$ $M_4$ यात्राकालेनवे ($T_3$ °कालनवे)क्ष्यैव, $G_{1-3}$ काले च नैवेक्ष्य (for the prior half) $M_{2.4}$ कोप (for कोप) $D_{10}$ $T_{2.3}$ G पश्चात्को पफलोदय (for the post half) —(L 979) $T_3$ कारण (for °णात्) — $G_2$ om (hapl) lines 980–983 —(L 981) $T_2$ धर्मार्थ, $T_3$ धर्मार्थ (for धर्माय) $T_1$ चेष्यते (for दृ°) —(L 982) $T_3$ वापद्विधि, $G_4$ पश्चाद्विधि (for आप°) $T_1$ न कुर्यादापदः पदं (for the post. half) — $T_1$ om line 983 —(L 983) $T_3$ सर्वं प्राणिनां (for सर्वान्प्रजानां) —(L 984) $T_1$ राज्ञा (for अन्य) $M_4$ अयप्रभृति युक्तानां (for the prior half) $T_1$ राज्ञां वृत्तिं विचारयेत् (for the post half) —(L 985) $D_{10}$ $T_{2.3}$ प्रति, $G_2$ [अ]पि प्र (for [आ]पत्प्र°) $T_1$ वृत्तिं चापि प्रपन्नानां (for the prior half) — $T_1$ om line 986 —(L 986) $D_{10}$ $T_{2.3}$ $G_2$ व्रतमुभयसाधनं (sic), $G_{1.3.4}$ व्रतं तूभयसाधनं (for the post half) —(L 987) $T_1$ आत्मनश्च शुभं कार्यम् (for the prior half) — $T_1$ om (hapl) line 988 —(L 988) $D_{10}$ $T_3$ अलेपत्वं, $T_3$ अलोभत्वं (for अलेपत्वं) —(L 989) $D_{10}$ T G एष देवि (for एतदेव) —(L 990) $T_3$ रक्षयन् (for मर्त्य°) $G_{1.3}$ मर्त्यमयन्दण्डयन्प्रजाः (for the post half) —(L 991) $D_{10}$ $T_{2.3}$ G निष्कल्मषम् (for न किल्बिषम्) —(L 993) $T_1$ मोदते, $G_4$ पोष्यते (for तो°) —(L 996) $G_2$ $M_3$ राज (for राज्य) —(L 997) $T_3$ नना, $M_4$ यथा (for तथा) — $D_{10}$ S (except $M_{1-3}$) om (hapl) lines 999–1000 —(L 1001) T $G_{1.3}$ भाग्यानुगं (for भोगा°) $T_1$ विधितः संप्रवर्तते (for the post half) —(L 1002) $T_1$ परलोकाय न क्षमं (for the post half) —(L 1003) $D_{10}$ $G_2$ दुस्तर, $T_1$ विधुर, $G_{1.3}$ दुरित (for दुरन्त) — $T_1$ om (hapl) line 1004 —(L 1005) $D_{10}$ $T_{2.3}$ G तत्र (for यत्र).

अधर्म्यमयशस्यं च दुरन्तं च भवेद्ध्रुवम् ।
यत्र स्वच्छन्दतः सर्वं क्रियते कर्म राजभिः ।
यत्र भाग्यवशाद्भृत्या लभन्ते न विशेषतः । [ 1005 ]
यत्र दण्ड्या न दण्ड्यन्ते पूज्यन्ते वा नराधमाः ।
यत्र सन्तो विहन्यन्ते तत्र भाग्यानुगं भवेत् ।
शुभाशुभं यदा यत्र विपरीतं प्रदृश्यते ।
राज्ञि चासुरपक्षे तु तत्र भाग्यानुगं भवेत् ।
भाग्यानुगे तु राजानो वर्तमाना यथातथा । [ 1010 ]
प्राप्याकीर्तिमनर्थं च इहलोके शुभेक्षणे ।
परत्र सुमहाघोरं तमः प्राप्य दुरत्ययम् ।
निरयन्ति नरके देवि प्रलयान्तावधिं स्थितिम् ।
मोक्षणं दुष्कृतीनां तु विद्यते कालपर्ययात् ।
नास्त्येव मोक्षणं देवि राज्ञां दुष्कृतकारिणाम् । [ 1015 ]
एतत्सर्वं समासेन राजवृत्तं शुभाशुभम् ।
कथितं ते महाभागे भूयः श्रोतुं किमिच्छसि ।

Colophon

उमा ।

देवदेव महादेव सर्वदेवनमस्कृत ।
यानि धर्मरहस्यानि श्रोतुमिच्छामि तान्यहम् ।

महेश्वरः ।

रहस्यं श्रूयतां देवि मानुषाणां सुखावहम् । [ 1020 ]
नपुंसकेषु वन्ध्यासु वियोनौ पृथिवीतले ।
उत्सर्गो रेतसस्तेषु न कार्यो धर्मकाङ्क्षिभिः ।
एतेषु बीजं प्रक्षिप्तं न विरोहति वै प्रिये ।
यत्र वा तत्र वा बीजं धर्मार्थी नोत्सृजेत्पुनः ।
नरो बीजविनाशेन लिप्यते भ्रूणहत्यया । [ 1025 ]
अहिंसा परमो धर्मः अहिंसा परमं सुखम् ।
अहिंसा धर्मशास्त्रेषु सर्वेषु परमं पदम् ।
देवतातिथिशुश्रूषा सततं धर्मशीलता ।
वेदाध्ययनयज्ञाश्च तपो दानं दमस्तथा ।
आचार्यगुरुशुश्रूषा तीर्थाभिगमनं तथा । [ 1030 ]
अहिंसाया वरारोहे कलां नार्हन्ति षोडशीम् ।
एतत्ते परमं गुह्यमाख्यातं परमार्चितम् ।

उमा ।

यदि धर्मस्त्वहिंसाया निमर्त्यममरोत्तम ।
यज्ञेषु पशुबन्धेषु हन्यन्ते पशवो द्विजैः ।
कथं च भगवन्भूयो हिंसमाना नराधिपाः । [ 1035 ]
स्वर्गं सुदुर्गमं यान्ति सदा स रिपुसूदन ।
यस्यैव गोसहस्राणि विंशतिः साधिकानि तु ।
अहन्यहनि हन्यन्ते द्विजानां मांसकारणात् ।
समासं तु स दत्त्वात्र रन्तिदेवो नराधिपः ।
कथं स्वर्गमनुप्राप्तः परं कौतूहलं हि मे । [ 1040 ]
किं नु धर्मं न शृण्वन्ति न श्रद्दधति वा श्रुतम् ।

---

T1 M1 ‡ transp लभन्ते and न — (L 1006) D10 G1 वै, T‡ न (for वा) — T1 om line 1007 — (L 1007) T‡ वसन्त्य, M‡ ३ [s]वि हयन (for विहन्यन्ते) G1 ‡ सन्तो (for तत्र) — D10 reads lines 1008-1009 twice — (L 1008) D10 (both times) T1 ‡ G यदा (for यदा) T‡ यत्र (for यत्र) — T1 om lines 1009 1010 — (L 1009) G1 ‡ ‡ नाम्नु (for राज्ञि चा) — (L 1010) G‡ यथाय (for °तथा) —(L 1011) M1-‡ अनाद (for अनर्थं) T‡ प्राप्य लोके शुभ वे, G‡ प्राप्य कीर्तिमर्थानि न (for the prior half) G1,‡ शुभानने (for शुभेक्षणे) — (L 1012) T1 सुखाद् (for सुमहा) T1 दुःख (for तम) — T1 om line 1014 — (L 1014) T‡ न (for तु) D10 G‡ मोक्षं तु (G‡ न) सुकृतानां न, T‡ [illegible] दुष्कृतानां न (for the prior half) — (L 1015) G1-‡ दुष्कृत, M‡ दुष्कृति (for दुष्कृत) — (L 1017) D10 transp श्रोतुं and किं T1 ‡ G‡ किं [illegible] श्रोतुमिच्छसि (for the post half) — Colophon — Adhy name D10 T‡ G‡ M [illegible] [illegible], T‡ ‡ [illegible] — Adhy no D10 T‡ ‡ G‡ ‡ 195, T1 M‡ 188, G1 ‡ M1 189, M‡ ‡ 190 — T1 [illegible] (for महेश्वर) — (L 1023) D10 T‡ ‡ G न (for वि-) — (L 1024) G‡ बीजार्थं (for वा बीज) D10 G‡ धर्मार्थं (for °र्थी) — (L 1025) D10 T‡ G‡ बध्यते (for लिप्यते) D10 T2 ‡ G‡ ब्रह्म (for भ्रूण) —T1 om (hapl) line 1027 — (L 1027) G‡ सर्व- (for धर्म) G‡ अहिंसा (for सर्वेषु) — T1 om (hapl) line 1030 — (L 1031) G1 M‡ ‡ नार्हति (for °न्ति) — (L 1032) T1 आख्यातं शुभदर्शने (for the post. half) — (L 1033) D10 T‡ [अ]हिंसाया, T1 [अ]हिंसा वै (for [अ]हिंसायां) — (L 1035) T1 भूमौ (for भूयो) — (L 1036) T8 दुर्गमम (for सुदुर्गम) T8 ते च, G1 ‡ तदा सम (for सदा स) D10 G1 ‡ M1-8 रिपुसूदना — T1 transp lines 1037 and 1038 — (L 1037) M तस्य (for यस्य) — T reads line 1038 twice — (L 1038) T1 (both times) ‡ द्विजानां गोसहस्य न (T‡ तु) (for the post half) — (L 1039) T1 8 समा [illegible] [illegible] G‡ मासं तु स द [illegible] (for the prior half) — (L 1040) T2 [illegible] (for स्वर्गमनु-) — (L 1041) G1 ‡ श्रमान्, G‡ धर्माणि (for धर्मं न) — (L 1042) T‡ ‡ M मृगया वै (M1-3 ये) (for मृगयायै) G1 ‡ ‡ मृगयां वै विनिघ्नन्द (for the prior half) — T1 om line 1043 — (L 1043) M अक्षेपेण (for

मृगयार्थं विनिर्गत्य मृगान्घ्नन्ति नराधिपाः ।
एतत्सर्वं विशेषेण विस्तरेण वृषध्वज ।
श्रोतुमिच्छामि भगवंस्त्वमेतन्ममोच्यताम् ।

महेश्वर ।

बहुमान्यमिदं देवि नास्ति कश्चिदहिंसकः । [ 1045 ]
श्रूयतां कारणं चात्र यथानेकविधं भवेत् ।
दृश्यते चापि लोकेऽस्मिन्न कश्चिदविहिंसकः ।
धरणीसंश्रिताञ्जीवान्सुसूक्ष्मांश्चैव मध्यमान् ।
संचरंश्चरणाभ्यां च हन्ति जीवाननेकशः ।
अज्ञानाज्ज्ञानतो वापि ये जीवाः शयनासने । [ 1050 ]
उपविशञ्शयानश्च हन्ति जीवाननेकशः ।
शिरोवस्त्रेषु ये जीवा नराणां स्वेदसंभवाः ।
तांश्च हिंसन्ति सततं दंशांश्च मशकानपि ।
जले जीवास्तथाकाशे पृथिवी जीवमालिनी ।
एवं जीवाकुले लोके कोऽसौ स्यादप्यविहिंसकः । [ 1055 ]
स्थूलमध्यमसूक्ष्मैश्च स्वेदवातमहीरुहैः ।
दृश्यरूपैरदृश्यैश्च नानारूपैश्च भामिनि ।
जीवैस्ततमिदं सर्वमाकाशं पृथिवी तथा ।
अन्योन्यं ते च हिंसन्ति दुर्बलान्बलवत्तराः ।
मत्स्या मत्स्यान्ग्रसन्तीह खगांश्चैव खगास्तथा । [ 1060 ]
सरीसृपाश्च जीवन्ति कपोताद्या विहंगमाः ।
भूचराः खेचराश्चान्ये क्रव्यादा मांसगृद्धिनः ।
समृद्धाः परमांसैस्तु भक्षैरन्यैरपि चापरैः ।
सत्त्वैः सत्त्वानि जीवन्ति शतशोऽथ सहस्रशः ।
अपीडयित्वा नैवान्यं जीवा जीवन्ति सुन्दरि । [ 1065 ]
स्थूलकायस्य सत्त्वस्य खरस्य महिषस्य वा ।
जीवन्त्येकस्य मांसेन पयसा रुधिरेण वा ।
तृप्यन्ते बहवो जीवाः क्रव्यादा मांसभोजिनः ।
एको जीवसहस्राणि सदा खादति मानवः ।
अनाद्यस्योपभोगेन धान्यसत्त्वानि यानि तु । [ 1070 ]
मांसमत्स्यं सर्पींश्च भोजनं परिवर्जयेत् ।
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ।
धान्यानि यो न हिंसेताहिंसकः परिकीर्तितः ।
नाश्नाति यावतो जीवांस्तावत्पुण्येन युज्यते ।
आहारस्य वियोगेन शरीरं परितप्यते । [ 1075 ]
तप्यमाने शरीरे तु शरीरं चेन्द्रियाण्यपि ।
वशे तिष्ठन्ति सुश्रोणि नृपाणामिव किंकराः ।
निरुद्धेन्द्रियाण्येव स सुखी स विचक्षणः ।
इन्द्रियाणां निरोधेन दानेन च दमेन च ।
नरः सर्वमवाप्नोति मनसा यद्यदिच्छति । [ 1080 ]
एतन्मूलमहिंसाया उपवासः प्रकीर्तितः ।
आहारं कुरुते यस्तु भूमिमाक्रमते च यः ।
सर्वे ते हिंसका देवि यथा धर्मेषु दृश्यते ।
यथेहाहिंसको देवि तत्त्वज्ञो जायते नरः ।
तथा तदहं प्रवक्ष्यामि श्रूयतां धर्मचारिणि । [ 1085 ]
फलानि जीर्णपर्णानि भस्म वा योऽपि भक्षयेत् ।

---

विशे°) — (L 1044) D10 G1 तत्त्वेन, T2 G1-3 तत्सर्वं, T3 सर्वं (for भगवन्) D10 T1 3 G M4 अद्य (for एतन्) T2 मह्यं मे मोच्यताम् (for the post half) — T1 महेश°, T2 3 G1 ईश्वर° (for महेश्वर) — T1 om line 1046 — (L 1046) M4 नैक (for [अ]नेक-) — (L 1047) G1 3 न हि कश्चिदहिंसकः, G2 कश्चित्प्यनहिंसकः (for the post half) — T2 om (hapl) lines 1048–1055 — (L 1048) G1 धरणीं T3 G M1. 2 देवि (for जीवान्) T1 [अ]पि (for [ए]व) — (L 1050) T1 सन्ति (for ये नावा°) — (L 1052) D10 शिरोवस्त्रे नी ? (for the prior half). — (L 1055) T1 वा (for ऽसौ) — (L 1056) D10 T2 3 G2 4 M4 -वारि- (for -वात-) — (L 1058) T1 जीवनत्त्वम् (for जीवैस्ततम्) — (L 1059) T1 अपि (for ते च) — (L 1060) G1 3 M4 मत्स्यान्मत्स्या (by transp) T1 च हिंसन्ति (for ग्रसन्तीह) T3 मत्स्या-गृहन्ति वै मत्स्या (for the prior half) T1 खगश्चापि खगास्तथा (for the post half) — (L 1061) T मयूराद्या (for कपोताद्या) — (L 1062) M1-3 भूचरान् (for °रा) T2 G1 3 गर्द्धिन (for गृद्धिन) — T1 om lines 1063–64 — (L 1063) D10 T3 G1-3 ते, T2 G4 च (for ये) G4 ये परे (for चापरैः) — (L 1065) T1 [अ]न्यान् (for [अ]न्यं) — (L 1066) T1 om from the post. half up to the prior half of line 1067 D10 T2 G च (for वा) — (L 1067) T1 मांसेन (for पयसा) G4 च (for वा) — (1068) T1 तृप्यन्ति (for °न्ते) T2 G2 भोजना (for भोजिनः) — (L 1069) G1 एव (for एको). G2 जात (for जीव-) — T1 om lines 1070–1071 — (L 1070) M3 भोग (for धान्य-) — T1 reads lines 1072 1073 after line 1077 — (L 1072) D10 T2 G M4 तथा (for अथ) — (L 1073) T1 सोऽहिंस° (for [अ]हिंसकः) — (L 1074) D10 T3 G2 4 जीवम् (for जीवान्) — (L 1076) D10 G तु, T1 2 च (for [अ]पि) — (L 1078) M3 [ए]व (for [ए]व) — (L 1081) D10 T2 3 G एवं (for एतन्) — T1 om lines 1082–1083 — (L 1082) G3 स (for य) — before line 1084, T1 ins महेश — (L 1084) D10 T. G1 यथैव, T1 3 G1 3 तथैव, G2 यथा वा (for यथेह) — (L 1085) D10 T2 यथा (for तथा) D10 T2 G1-3 त त, T1 तेषां, T3 G4

आलेख्यमिव निश्चेष्ट त मन्येऽहमहिंसकम् ।
आरम्भा हिंसया युक्ता धूमेनाग्निरिवावृता ।
तस्माद्यस्तु निराहारस्त मन्येऽहमहिंसकम् ।
यस्तु सर्व समुत्सृज्य दीक्षितो नियत शुचि । [ 1090 ]
कृत्वा मण्डलमर्यादा सकल्प कुरुते नर ।
यावज्जीवमनाशित्वा कालाकाङ्क्षी दृढव्रत ।
ध्यानेन तपसा युक्तस्त मन्येऽहमहिंसकम् ।
अन्यथा हि न पश्यामि नरो य स्यादहिंसक ।
बहु चिन्त्यमिद देवि नास्ति कश्चिदहिंसक । [ 1095 ]
यतो यतो महाभागे हिंसा स्यान्महती तत ।
निवृत्तौ मधुमासाभ्यां हिंसा स्वल्पतरा भवेत् ।
निवृत्तिः परमो धर्मो निवृत्ति परम सुखम् ।
मनसा विनिवृत्तानां धर्मस्य निचयो महान् ।
मनःपूर्वंगमा धर्मा अधर्माश्च न सशय । [ 1100 ]
मनसा बध्यते चापि मुच्यते चापि मानव ।
निगृहीते भवेत्स्वर्गो विसृष्टे नरको ध्रुव ।
घातक शस्त्रमुद्यम्य मनसा चिन्तयेद्यदि ।
आयु क्षय गतेऽप्यपां मृते तु प्रहराम्यहम् ।
इति यो घातको हन्यात्स पापेन लिप्यते । [ 1105 ]
विधिना निहत पूर्व निमित्त स तु घातक ।
विधिर्हि बलवान्देवि दुस्त्यज वै पुराकृतम् ।
जीवा पुराकृतेनैव तिर्यग्योनिसरीसृपा ।
नानायोनिषु जायन्ते स्वकर्मपरिवेष्टिता ।
नानाविधविचित्राङ्गा नानावीर्यपराक्रमा । [ 1110 ]
नानाभूमिप्रदेशेषु नानाहाराश्च जन्तव ।
जायमानस्य जीवस्य मृत्यु पूर्व प्रजायते ।
सुखं वा यदि वा दु ख यथा पूर्व कृत तथा ।
प्राप्नुवन्ति नरा मृत्यु यदा यत्र च येन च ।
नातिक्रान्तु हि शक्य स्याद्विदेश पूर्वकर्मणः । [ 1115 ]
अप्रमत्त प्रमत्तेषु विधिर्जागर्ति जन्तुषु ।
न हि तस्य प्रिय कश्चिन्न द्वेष्यो न च मध्यम ।
सम सर्वेषु भूतेषु काल काल निरीक्षते ।
गतायुषो ह्याक्षिपति जीव सर्वस्य देहिन ।
यथा येन च मर्तव्य तथा युज्येत मृत्युना । [ 1120 ]
अवशो नीयते तत्र मर्तव्य यत्र येन तु ।
अरण्ये स्वगृहे वापि रात्रौ वाहनि वा तथा ।
यथा येन हि मर्तव्यं नान्यथा म्रियते हि स ।
दृश्यते न च लोकेऽस्मिन्भूतो भव्योऽपि वा पुनः ।
विज्ञानैर्विक्रमैर्वापि नानामन्त्रौषधैरपि । [ 1125 ]
यो हि वञ्चयितु शक्तो विधेस्तु नियता गतिम् ।
एष तेऽभिहितो देवि जीवहिंसाविधिक्रम ।

Colophon

महेश्वर ।

श्रूयतां कारण देवि यथा हि दुरतिक्रम ।
विधि सर्वेषु भूतेषु मर्तव्ये समुपस्थिते ।
आयु क्षयेणोपहता समागम्य वरानने । [ 1130 ]
कीटा पतगा बहव स्थूला सूक्ष्माश्च मध्यमा ।
प्रज्वलत्सु प्रदीपेषु स्वयमेव पतन्ति ते ।

---

ते स ( for तेऽह ) — ( L 1086 ) D10 T2 3 G मूल- ( for जीर्ण- ) — ( L 1089 ) M1-3 निरारंभस् ( for °हारस् ) — T1 om lines 1090-1091 G2 om ( hapl. ) lines 1090-1093 — ( L 1090 ) G1 हिंसां, G4 पूर्व ( for सर्व ) D10 T2 3 G3 3 4 दीक्षित्वा ( for °तो ) — ( L 1093 ) D10 T1 3 धन्येन ( for ध्यानेन ) — ( L 1094 ) G4 तु ( for हि ) — G2 om ( hapl ) line 1095 T1 om line 1096 — ( L 1097 ) G2 अल्पतरा ( for स्वल्प° ) — ( L 1100 ) Cf Dhammapada 1 D10 S मन पूर्वा ( G4 र्व ) गमा ( G1 2 °म ) धर्मा ( for the prior half ) — ( L 1103 ) M1-3 मनसा चिंतयन्यत ( for the post half ) — ( L 1104 ) D10 T2 G3 आयु क्षय , T3 °क्षये ( for °क्षय ) D10 T1 2 G M4 [ऽ]न्येषां ( for ऽप्यपां ) — ( L 1106 ) D10 G4 विधिर्हि ( for विधिना ) — ( L 1107 ) T3 हि ( for वै ) — ( L 1108 ) T1 जीवा पुराकृताश्चैव ( for the prior half ) — ( L 1110 ) D10 नानायुग , G1 3 4 °युध , G2 °युधा ( for °विध ) T2 विशुद्धांगा D10 T2 3 G -शौर्य ( for -वीर्य ) — ( L 1111 ) T1 नानावेष धराश्चैव ( for the prior half ) — ( L 1112 ) T1 पुत्रस्य ( for जीवस्य ) T1 उत्पिन ( for प्रजायते ). — T1 om line 1113 — ( L 1113 ) G M पूर्व ( for पूर्व ) D10 G तु वा, T3 त्वया ( for तथा ) — ( L 1114 ) D10 T1 यथा ( for यदा ). — ( L 1115 ) G4 तु ( for हि ) D10 T1 G1 2 4 शक्य ( for शक्य ) D10 T2 G4 निर्देश ( for निदेश ) T2 G2 -कर्मणि ( for °ण ) — ( L 1119 ) T1 गतायुष ( for °षो ) D10 G ग्राक्षिपते ( for °ति ) T3 G1 3 4 जीव ( for जीव ) — D10 om ( hapl ) lines 1120-1124 T G M4 om ( hapl ) lines 1120-1122 — ( L 1124 ) G1 भूत- ( for भूतो ) T2 G3 4 द्विधा, T3 यथा ( for ऽपि वा ) — ( L 1127 ) D10 T2 3 वि- ( for ऽभि ) — Colophon — *Adhy name* D10 T2 3 G2 उमामहेश्वरसंवादे जीवहिंसाविधि . M उमामहेश्वरसवाद — *Adhy no* D10 T2 3 G3 4 196, G1 3 M1 190, M2 3 191, M4 189 — T1 महेश , G2 शिव ( for महेश्वर ) — ( L 1129 ) T2 देवेषु ( for भूतेषु ) — ( L 1130 ) D10 G3 3 [उ]पहिता , T1 °गता , T2 °चिता , G1 °रता ( for °हता ) — ( L 1131 ) T G1-3 M3 स्थूल ( for स्थूला ) — ( L 1132 ) T1 [अ]भिदेशेषु ( for

बहूनां मृगयूथानां नानावननिषेविणाम् ।
यस्तु कालहतस्तेषां स वै कालेन वध्यते ।
सूनार्थं देवि वध्यन्ते क्षीणायुषो नियच्छते । [ 1135 ]
अवशो वातवस्यात्र हस्तं तदहरेति स ।
यथा पक्षिगणाः क्षिप्रं विस्तीर्णाकाशगामिनः ।
क्षीणायुषो नियच्छन्ते शक्ता अपि पलायितुम् ।
यथा वारिचरा मीना बहवो बहुजातयः ।
जालं समधिरोहन्ति स्वयमेव विधेर्वशात् । [ 1140 ]
शल्यकस्य च जिह्वाग्रं स्वयमारुह्य शोभने ।
आयुःक्षयेणोपहता निपतन्ते सरीसृपाः ।
कृपता कर्षकाणां च नास्ति बुद्धिर्विहिंसने ।
अथैषां लाङ्गलाद्यैर्हन्यन्ते जन्तवोऽज्ञया ।
पादाग्रेणैव चैकेन या हिंसा कुरुते नरः । [ 1145 ]
मातृगोऽपि न तां कुर्यात्क्रूरो जन्मशतैरपि ।
म्रियन्ते यैर्हि मर्तव्यं न तान्हन्ति कृषीवलः ।
कृपामीति मतिस्तस्य नास्ति चिन्ता विहिंसने ।
तस्माज्जीवसहस्राणि हत्वापि न स लिप्यते ।
विधिना विहितं पूर्वं पश्चात्प्राणी विपद्यते । [ 1150 ]
एवं सर्वेषु भूतेषु विविधैर्हि दुरतिक्रमः ।
गतायुषा न शक्यं हि मुहूर्तमपि जीवितुम् ।
जीवितव्ये न मर्तव्यं न भूतं न भविष्यति ।
शुभाशुभं कर्मफलं न शक्यमतिवर्तितुम् ।
तथा ताभिश्च मर्तव्यं मोक्तव्यार्थेव तान्नया । [ 1155 ]
रन्तिदेवस्य गावो वै विधैर्हि वशमागताः ।
स्वयमायान्ति गावो वै हन्यन्ते यत्र सुन्दरि ।
गवां वै हन्यमानानां रुधिरप्रभवा नदी ।
चर्मण्वतीति विख्याता खुरशृङ्गास्थिदुर्गमा ।
रुधिरं तां नदीं प्राप्य तोयं भवति शोभने । [ 1160 ]
मेध्यं पुण्यं पवित्रं च गन्धवर्णरसैर्युतम् ।
तत्राभिषेकं कुर्वन्ति कृतजप्याः कृताह्निकाः ।
द्विजा देवगणाश्चापि लोकपाला महेश्वराः ।
तस्य राज्ञः सदा सत्रे स्वयमागम्य सुन्दरि ।
विधिना पूर्वदृष्टेन तन्मांसमुपकल्पितम् । [ 1165 ]
मन्त्रवत्प्रतिगृह्णन्ति यथान्यायं यथाविधि ।
समासं च सदा ह्यत्र शतशोऽथ सहस्रशः ।
भुञ्जानानां द्विजातीनामस्तमेति दिवाकरः ।
गावो यास्तत्र हन्यन्ते राज्ञस्तस्य क्रतूत्तमे ।
पच्यमानेषु मन्त्रेषु यथान्यायं यथाविधि । [ 1170 ]
ताश्च स्वर्गं गता गावो रन्तिदेवश्च पार्थिव ।
सदा सत्रविधानेन सिद्धिं प्राप्तो नरेश्वर ।
अथ यस्तु सहायार्थमुक्तः स्वात्मार्थिभिर्नरैः ।
भोगानां संविभागेन वस्त्राभरणभूषणैः ।
सहभोजनसवत्नैः सत्कारैर्विविधैरपि । [ 1175 ]
सहायकाले संप्राप्ते समामे शस्त्रमुद्धरेत् ।
व्यूढानीके यथा शस्त्रं सेनयोरुभयोरपि ।
हस्त्यश्वरथसंपूर्णे पदातिबलसंकुले ।
चामरच्छत्रशबले ध्वजचर्मायुधोज्ज्वले ।
शक्तितोमरकुन्तासिशूलपट्टसधारिभिः । [ 1180 ]
कूटमुद्गरचापेषुभुशुण्डीजुष्टमुष्टिभिः ।
भिन्दिपालगदाचक्रप्रासकर्पणधारिभिः ।
नानाप्रहरणैर्योधैः सेनयोरुभयोरपि ।
युद्धशौण्डैः प्रगर्जद्भिर्वृषेषु वृषभैरिव ।

---

प्रवेशेषु ) M1-2 वै ( for ते ) — ( L. 1133 ) T2 G2 नानामृग ( for °वन ) — ( L 1134 ) D10 T1 2 G1-3 °नाद्म् ( for °द्नम् ) D10 T G स वै ( G2 सर्वे ) पाशेन बध्यते ( for the post half ) — ( L 1135 ) T1 [ऽ]ति ( for ति ) — ( L 1138 ) T2 प्र ( for ति ) — ( L 1139 ) T2 G1 2 4 [प]ुज, T3 [अ]पुनि ( for बहु ) — ( L 1141 ) G2 रोने ( for शोभने ) — ( L 1142 ) D10 T2 3 G °बध्यते, T1 °वर्तते ( for °पद्यन्ते ) — ( L 1144 ) T1 तथैषां, M1 अन्येषां ( for अथैषां ) — ( L 1145 ) M द्विवा ( for [ए]व च ) — ( L 1147 ) T2 3 G2 M3 कृषीवला G1 3 न तान्घ्नति कृषीवला ( for the post. half ) — ( L 1148 ) D10 T2 3 G4 कृपाति, T1 कृपामि ( for कृपामि ) D10 T1 2 G1-3 मतस्, T2 विधिस् ( for मतिस् ) — ( L 1150 ) D10 म इत, T2 3 G1 साहित ( for विहित ) — ( L 1152 ) D10 G4 मुहूर्तं तु ( for न शक्यं हि ) T2 G1.2 क्षणमप्युपजीवितु, G4 न शक्यमुप° ( for the post half ) — ( L. 1153 ) G4 जीवितं मे ( for °तव्ये ) — T1 om line 1155 — ( L 1156 ) T1 हि ( for वै ) — ( L 1157 ) T1 G2 M1 2 ( also as above ) 4 हि ( for वै ) — ( L. 1158 ) T1 G1-3 M4 °प्रवहा ( for प्रभवा ) — ( L. 1159 ) G2 सकुला ( for दुर्गमा ) — T1 om. lines 1161 and 1164 T1 om the post. half of line 1166 and the prior half of line 1167 — ( L 1167 ) G1 3 4 यथा, G2 यत्र ( for सप्त ) T1 मांसमत्र ( for शतशोऽथ ) — ( L 1168 ) M1 2 4 दिवाकरे ( for °र: ) T1 om the post half of line 1169 and the prior half of line 1170 — ( L 1172 ) D10 T2 G नरोत्तम:, T1 वरानने ( for नरेश्वर ) — ( L 1173 ) T1 M4 सन् ( for स्वात् ) — T1 om ( hapl ) lines 1176–1177 and om. lines 1180–1188 — ( L 1180 ) D10 T2 3 G M1 2 3 ( also as above ) 4 °शूलमुद्गरपाणिभि: ( for the post. half ) — ( L 1182 ) D10 T2 3 G M भिंडिपाल D10 T3 G कपट, T2 मुद्गर ( for °कपण ) — ( L 1186 ) D10 T2 3 G1 तु ( for च ) — ( L 1189 ) D10 T2 G

रयमध्यगतो वापि हयपृष्ठगतोऽपि वा ।
हन्यते यस्तु सग्रामे शक्रलोके महीयते ।
स्वर्गे हन्वा पूज्यते वैर्हतस्तत्रैव पूज्यते । [ 1235 ]
द्वावेतौ सुखमेधेते हन्ता यश्चैव हन्यते ।
तस्मात्सग्राममासाद्य प्रहर्तव्यमभीतवत् ।
निर्भयो यस्तु सग्रामे प्रहरेदुद्यतायुध ।
राज्ञो वल्लभतामेति कुल भावयते स्वकम् ।
यथा नदीसहस्राणि प्रविष्टानि महोदधिम् । [ 1240 ]
तथा सर्वे न सदेहो धर्मो धर्मभृता वरे ।
प्रविष्टा राजधर्मेण आचार्यविनयस्तथा ।
वेदोक्ताश्चैव ये धर्मा पाषण्डेषु च कीर्तिता ।
तथैव मानवा धर्मा धर्माश्चान्ये तथापरे ।
देशजातिकुलाना च ग्रामधर्मास्तथैव च । [ 1245 ]
ये धर्मा पार्वतीयेषु ये धर्मा पत्तनादिषु ।
तेषा पूर्वप्रवृत्ताना कर्तव्य परिरक्षणम् ।
धर्म एव हतो हन्ति धर्मो रक्षति रक्षित ।
तस्माद्धर्मो न हन्तव्य पार्थिवेन विशेषत ।
प्रजा पाल्यते यत्र धर्मेण वसुधाधिप । [ 1250 ]
षट्कर्मनिरता विप्रा पूज्यन्ते पितृदेवता ।
नैव तस्मिन्ननावृष्टिर्न रोगा नाप्युपद्रवा ।
धर्मशीला प्रजा सर्वा स्वधर्मनिरते नृपे ।
एष्टव्य सतत देवि युक्ताचारो नराधिप ।
छिद्रज्ञश्चैव शत्रूणामप्रमत्त प्रतापवान् । [ 1255 ]
क्षुद्रा पृथिव्या वहवो राजा वहुविनाशका ।
तस्मात्प्रमाद सुश्रोणि न कुर्यात्पण्डितो नृप ।
तेषु मित्रेषु त्यक्तेषु तथा मर्त्येषु हस्तिषु ।
विस्रम्भो नोपगन्तव्य स्नानपानेषु नित्यदा ।
राज्ञो वल्लभतामेति कुल भावयते स्वकम् । [ 1260 ]
यस्तु राष्ट्रहितार्थाय गोब्राह्मणकृते तथा ।
वन्दिग्राहाय मित्रार्थे प्राणास्त्यजति दुस्त्यजान् ।
सर्वकामदुघा धेनु धरणीं लोकधारिणीम् ।
ससुद्रान्ता वरारोहे सशैलवनकाननाम् ।
दद्याद्देवि द्विजातिभ्यो वसुपूर्णां वसुधराम् । [ 1265 ]
न तत्सम वरारोहे प्राणत्यागी विशिष्यते ।
सहस्रमपि यज्ञाना यजते यदि चर्द्धिमान् ।
यज्ञैस्तस्य किमाश्चर्यं प्राणत्याग सुदुष्कर ।
तस्मात्सर्वेषु यज्ञेषु शस्त्रयज्ञो विशिष्यते ।
एव सग्रामयज्ञास्ते यथातत्त्वमुदाहृता । [ 1270 ]

Colophon

महेश्वर ।

मृगयात्रा तु वक्ष्यामि शृणु ता धर्मचारिणि ।
मृगान्हत्वा महीपालो यथा पापैर्न लिप्यते ।
निर्मानुषामिमा सर्वे मृगा इच्छन्ति मेदिनीम् ।
भक्षयन्ति च सस्यानि शमितव्या नृपेण ते ।
दुष्टाना शासन धर्म शिष्टाना परिपालनम् । [ 1275 ]
कर्तव्य भूमिपालेन नित्य कार्येषु चार्जवम् ।
स्वर्गं मृगाश्च गच्छन्ति स्वय नृपतिना हता ।
यथा गावो ह्यगोपालास्तथा राष्ट्रमनायकम् ।
तस्माद्शास्तु देवाना गन्धर्वोरगरक्षसाम् ।
राज्ये नियुक्ता राष्ट्रेषु प्रजापालनकारणात् । [ 1280 ]
अशिष्टशासने चैव शिष्टाना परिपालने ।
तेषा चर्यां प्रवक्ष्यामि श्रूयतामनुपूर्वश ।
यथा प्रचरता तेषा पार्थिवाना यशस्विनि ।
राष्ट्र धर्मो धन चैव यश कीर्तिश्च वर्धते ।

---

( hapl. ) from the post half of line 1234 up to the prior half of line 1238 — ( L 1235 ) $D_{10}$ T $G_{1\,3\,4}$ स्वर्गे हना प्रपूज्यते ( for the prior half ) $D_{10}$ $T_{2\,3}$ $G_{1\,3\,4}$ हना त्वत्र ( for हनस्तत्र ) — $G_2$ om lines 1237–1256 — ( L 1238 ) $T_1$ $G_{1\,3}$ M प्रहरति ( for °रेद् ) — $D_{10}$ T $G_{1\,3\,4}$ $M_4$ om line 1239 — ( L 1241 ) $D_{10}$ $T_2$ धर्मे धर्मभृतां वर, $T_{1\,3}$ $G_{1\,3}$ धर्माधर्मभृता वरे ( $G_{1\,3}$ °र ) ( for the post. half ) — $T_1$ om line 1242 — ( L 1242 ) $D_{10}$ $T_2$ $G_{1\,3\,4}$ आचार° ( for °य ) $T_1$ om ( hapl ) from the post. half of line 1243 up to the prior half of line 1244 — ( L 1244 ) $G_{1\,3\,4}$ च ( for [ए]व ) $D_{10}$ $T_{2\,3}$ मानुषा ( for मानवा ) $D_{10}$ $T_2$ $G_4$ [र]तरे ( for [अ]परे ) $T_1$ धर्माश्चैव तु मानवा ( for the post. half ) — ( L 1245 ) $T_1$ देशजा कुलजाश्चैव ( for the prior half ) — ( L 1246 ) $D_{10}$ $T_1$ ये धर्मा पट्टनादिषु ( for the post. half ) — Lines 1248–1249 = ( var ) Manu 8 15 — $T_1$ om line 1251 — ( L 1251 ) $G_3$ स्वकर्म ( for षट्कर्म ) — ( L 1253 ) $G_{1\,3}$ सत्यधर्मरते नृपे ( for the post half ) — ( L 1254 ) $T_1$ यष्टव्य ( for एष्टव्य ) $G_3$ एष्टव्य देवि सतत ( for the prior half ) — $T_1$ om lines 1255–1260 — ( L 1258 ) $G_{1\,3}$ भृत्येषु ( for मर्त्येषु ) — ( L 1262 ) $T_1$ प्राणत्याग सुदुष्कर ( for the post half ) — $G_1$ om lines 1266–1269 — ( L 1270 ) $D_{10}$ T G यथार्थं स( $T_1$ °वत्स )मुदाहृता ( for the post half ) — Colophon — *Adhy name* $T_{2\,3}$ $M_{1\,2\,4}$ उमामहेश्वरसवाद — *Adhy no* $T_1$ $G_3$ $M_1$ 191, $T_{2\,3}$ $G_4$ 197, $M_{2\,3}$ 192, $M_4$ 190 — $M_1$ om ( hapl ? ) from the post half of line 1272 up to the prior half of line 1276 — ( L 1273 ) $T_1$ गच्छति ( for इच्छन्ति ) — ( L 1278 ) $M_{1\,4}$ ऽराजक ( for अनायकम् ) – $T_1$ om lines 1281–1284 — ( L 1282 ) $T_3$ चेष्टा ( for चर्यां ) — $T_3$ om lines 1283–1287

नृपाणां पूर्वमेवाय धर्मो धर्मभृतां वरे । [ 1285 ]
सभाप्रपातटाकानि देवतायतनानि च ।
ब्राह्मणावसथाश्चैव कर्तव्या नृपसत्तमैः ।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ।
कुलमुत्सादयेयुस्ते क्रोधाविष्टा द्विजातयः ।
ध्मायमानो यथा ह्यग्निर्निर्दहेत्सर्वमिन्धनम् । [ 1290 ]
तथा क्रोधाग्निना विप्रा दहेयुः पृथिवीमिमाम् ।
न हि विप्रेषु क्रुद्धेषु राज्यं भुञ्जन्ति भूमिपाः ।
परिभूय द्विजान्मोहाद्वातापिनहुषादयः ।
सबन्धुमित्रा नष्टास्ते दग्धा ब्राह्मणमन्युभिः ।
शरीरं चापि शक्रस्य कृतं भगनिरन्तरम् । [ 1295 ]
ततो देवगणाः सर्वे इन्द्रस्यार्थे महामतिम् ।
प्रसादं कारयामासुः प्रणामस्तुतिवन्दनैः ।
तेन प्रीतेन सुश्रोणि गौतमेन महात्मना ।
तच्छरीरं तु शक्रस्य सहस्रभगचिह्नितम् ।
कृतं नेत्रसहस्रेण क्षणेनैव निरन्तरम् । [ 1300 ]
छित्त्वा मेषस्य वृषणौ गौतमेनाभिमन्त्रितौ ।
इन्द्रस्य वृषणौ भूत्वा क्षिप्रं वै श्लेषमागतौ ।
एवं विप्रेषु क्रुद्धेषु देवराजः शतक्रतुः ।
अशक्तः शासितुं राज्यं किं पुनर्मानुषो भुवि ।
क्रोधाविष्टो दहेद्विप्रः शुष्केन्धनमिवानलः । [ 1305 ]
भस्मीकृत्य जगत्सर्वं सृजेदन्यज्जगत्पुनः ।
अदेवानपि देवांस्तु कुर्याद्देवानदेवताः ।
तस्मान्नोत्पादयेन्मन्युं मन्युप्रहरणा द्विजाः ।
महत्स्वप्यपराधेषु शासनं नार्हति द्विजः ।
न च शस्त्रनिपातानि न च प्राणैर्वियोजनम् । [ 1310 ]
दृश्यते त्रिषु लोकेषु ब्राह्मणानामनिन्दिते ।
क्रोधाश्च विपुला घोराः प्रसादाश्चाप्यनुत्तमाः ।
तस्मान्नोत्पादयेत्क्रोधं नित्यं पूज्या द्विजातयः ।
दृश्यते न स लोकेऽस्मिन्भूतो वाथ भविष्यति ।
क्रुद्धेषु यो वै विप्रेषु राज्यं भुङ्क्ते नराधिपः । [ 1315 ]
न चैवोपहसेद्विप्रान्न चैवोपालभेच्च तान् ।
कालमासाद्य कुप्येच्च काले कुर्यादनुग्रहम् ।
सप्रहासश्च भृत्येषु न कर्तव्यो नराधिपैः ।
लघुत्वं चैव प्राप्नोति आज्ञा चास्य निवर्तते ।
भृत्यानां सप्रहासेन पार्थिवः परिभूयते । [ 1320 ]
अयाच्यानि च याचन्ति अवक्तव्यं ब्रुवन्ति च ।
पूर्वमप्युचितैर्लाभैः परितोषं न यान्ति ते ।
तस्माद्भृत्येषु नृपतिः सप्रहासं विवर्जयेत् ।
न विश्वसेदविश्वस्ते विश्वस्ते च न विश्वसेत् ।
स्वगोत्रेषु विशेषेण सर्वोपायैर्न विश्वसेत् । [ 1325 ]
विश्वासाद्भयमुत्पन्नं हन्याद्वृक्षमिवाशनिः ।
प्रमादाद्धन्यते राजा लोभेन च वशीकृतः ।
तस्मात्प्रमादं लोभं च न कुर्यान्न च विश्वसेत् ।
भयार्तानां परित्राता दीनानुग्रहकारकः ।
तस्मात्कृत्यविशेषज्ञो नित्यं राष्ट्रहिते रतः । [ 1330 ]
सत्यसन्धः स्थितो राज्ये प्रजापालनतत्परः ।
अलुब्धो न्यायवादी च षड्भागं चोपजीवति ।
कार्याकार्यविशेषज्ञः सर्वं धर्मेण पश्यति ।
स्वराष्ट्रेषु दयां कुर्यादकार्यं न प्रवर्तते ।
ये चैनं प्रशंसन्ति ये च निन्दन्ति मानवाः । [ 1335 ]
शत्रुं च मित्रवत्पश्येदपराधविवर्जितम् ।
अपराधानुरूपेण दुष्टं दण्डेन शासयेत् ।
धर्मः प्रवर्तते तत्र यत्र दण्डरुचिर्नृपः ।

---

— (L 1289) $D_{10}$ $T_1$ मूलम् ( for कुलम् ) — (L. 1290) $T_2$ धार्यमाणो ( for ध्मायमानो ) $T_1$ वह्निर् ( for ह्यग्निर् ) $T_1$ M °हेत्सर्वमर्पीधन ( for the post half ) — (L 1292) $G_{1-3}$ न हि क्रुद्धेषु विप्रेषु ( for the prior half ) — (L 1293) $T_3$ यथा हि ( for वातापि ) — (L 1296) $G_{1\ 2}$ $M_4$ मुनिं ( for मतिम् ) — (L 1297) $D_{10}$ $G_2$ प्रसादं कामयामासु ( for the prior half ) $G_{1\ 3\ 4}$ प्रसाद- ( for प्रणाम ) — (L 1299) $T_2$ -निर्मित ( for -चिह्नितम् ) — (L 1301) $G_{1\ 3}$ [अ]स्य मेष ( for मेषस्य ) — (L 1304) $D_{10}$ मानुषा ( for °षो ) — (L 1316) $D_{10}$ T $G_{1\ 2\ 4}$ [अ]प- ( for [उ]प ) $T_1$ विद्वान् ( for विप्रान् ) — (L 1317) $G_{1\ 3}$ कुप्याच्च ( for कुप्येच्च ) — (L 1319) $T_1$ तस्य ( for चास्य ) — (L 1321) $G_2$ अयुक्तानि ( for अयाच्यानि ) — (L 1322) $T_1$ कृतैर् ( for पूर्वम् ) $G_{1\ 3\ 4}$ पूर्वमप्यर्पितैर्लाभै ( for the prior half ). — (L 1323) $T_1$ परिहासं विसर्जयेत् ( for the post half ).

— Line 1324 = ( var ) 12 136 138[cd], 136 318*, line 1 — (L 1324) $M_{1-3}$ अविश्वस्त ( for °स्ते ). $D_{10}$ T $G_{1-3}$ $M_{1\ 3}$ न च ( by transp ), $G_4$ नापि, $M_4$ om. — $G_2$ om ( hapl ) lines 1325–1328 — Line 1326 = ( var ) 12 136 138[cd] — (L 1326) $T_1$ विश्वस्ताद् ( for विश्वासाद् ) — (L 1328) $M_{1\ 3}$ प्रसादं ( for प्रमादं ) $T_2$ च कुर्यान्न ( for कुर्यान्न च ) — (L 1329) $D_{10}$ T $G_{3-4}$ $M_4$ भयत्राता ( for परि° ) $T_{2\ 3}$ $G_{3\ 4}$ कारणात् ( for -कारकः ) — $T_1$ om line 1330 — (L. 1330) $D_{10}$ $T_2$ G कार्याकार्य ( for तस्मात्कृत्य ) $D_{10}$ om the post half and the prior half of line 1331 — (L 1332) $T_1$ षड्भागकृतजीविन ( for the post half ) — (L 1333) $T_{2\ 3}$ $G_{3\ 4}$ $M_{1-3}$ सर्वं ( for सर्वं ) — (L 1334) $G_{2\ 3}$ अकार्ये ( for °र्यं ) $T_1$ प्रवर्तयेत् ( for °तते ) — (L 1337) $G_2$ दुष्टान् ( for दुष्ट ) — (L 1338) $T_1$ यत्र दण्ड प्रवर्तते ( for the post half ).

नाधर्मो विद्यते तत्र यत्र राजा क्षमान्वित ।
सशिष्टशासन धर्मे शिष्टाना परिपालनम् । [ 1340 ]
वध्याश्च घातयेयस्तु अवध्यान्परिरक्षति ।
अवध्या ब्राह्मणा गावो दूतश्चैव पिता तथा ।
विद्या ग्राहयते यश्च ये च पूर्वोपकारिण ।
स्त्रियश्चैव न हन्तव्या यश्च सर्वातिथिर्नर ।
धरणीं गा हिरण्य च सिद्धान्न च तिलान्घृतम् । [ 1345 ]
ददन्नित्य द्विजातिभ्यो मुच्यते राजकिल्बिषात् ।
एव चरति यो नित्य राजा राष्ट्रहिते रत ।
तस्य राष्ट्र धन धर्मो यश कीर्तिश्च वर्धते ।
न च पापैर्न चानर्थैर्युज्यते स नराधिप ।
षड्भागमुपयुञ्जन्य प्रजा राजा न रक्षति । [ 1350 ]
स्वचक्रपरचक्राभ्या धर्नर्वा विक्रमेण वा ।
निरुद्योगो नृपो यश्च परराष्ट्रनिघातने ।
स्वराष्ट्र निष्प्रतापस्य परचक्रेण हन्यते ।
यत्पाप परचक्रस्य परचक्राभिघातने ।
तत्पाप सकल राजा स्वराष्ट्र प्रपद्यते । [ 1355 ]
मातुल भागिनेय वा मातर श्वशुर गुरुम् ।
पितर वर्जयित्वैक हन्यात्तातकमागतम् ।
स्वस्य राष्ट्रस्य रक्षार्थ युध्यमानस्तु यो हत ।
सग्रामे परचक्रेण भूयता तस्य या गति ।
विमाने तु वरारोहे अप्सरोगणसेविते । [ 1360 ]
शक्रलोकमितो याति सग्रामे निहतो नृप ।
यावन्तो रोमकूपा स्युस्तस्य गात्रेषु सुन्दरि ।
तावद्वर्षसहस्राणि शक्रलोके महीयते ।
यदि वै मानुषे लोके कदाचिदुपपद्यते ।
राजा वा राजमात्रो वा भूयो भवति वीर्यवान् । [ 1365 ]
तस्माद्यत्नोऽनुकर्तव्य स्वराष्ट्रपरिपालने ।
व्यवहारश्च चारश्च सतत सत्यसधता ।
अप्रमाद प्रमोदश्च व्यवसायेऽप्यचण्डता ।
भरण चैव भृत्याना वाहनाना च पोषणम् ।
योधाना चैव सत्कार कृते कर्मण्यमोघता । [ 1370 ]
श्रेय एव नरेन्द्राणामिह चैव परत्र च ।

Colophon

महेश्वर ।

पशव पशुबन्धेषु ये हन्यन्तेऽध्वरेषु च ।
यूपे निबद्धा मन्त्रैश्च यथान्याय यथाविधि ।
मन्त्राहुतिविपूतास्ते स्वर्गं यान्ति यशस्विनि ।
तर्पिता यज्ञभागेषु तेषा मासैर्वरानने । [ 1375 ]
अग्नयस्त्रिदशाश्चैव लोकपाला सहेश्वरा ।
तेषु तुष्टेषु जायेत तस्य यज्ञस्य यत्फलम् ।
तेन सयुज्यते देवि यजमानो न सशय ।
सपत्नीक सपुत्र स स पितृभ्रातृभि सह ।
ये तत्र दीक्षिता देवि सर्वे स्वर्गं प्रयान्ति ते । [ 1380 ]
एतत्ते सर्वमाख्यात भूय श्रोतु किमिच्छसि ।

उमा ।

भगवन्सर्वभूतेश शूलपाणे महाद्युते ।
श्रोतुमिच्छाम्यह वृत्त सर्वेषां गृहमेधिनाम् ।
कीदृश चरित तेषा त्रिवर्गसहित प्रभो ।
प्रख्यायति कथ तेषा जीवनार्थमुदाहृतम् । [ 1385 ]

---

—(L 1339) T1 G. M वर्तते (for विद्यते) —T1 om line 1341 —(L 1342) D10 T1 2 G2 4 दूताश् (for दूतश्) T2 [ ]ति (for [प]र) —(L 1343) G3 श्रावयते (for ग्राह°) —(L 1346) T1 मुच्यते महतो भयात् (for the post half) —T1 om lines 1349–1351 —(L 1349) M4 [र्]गे (for स) —(L 1350) G1 3 M1 युञ्जान (for -युञ्जन्य) —(L 1351) D10 T2 G1 2 4 धर्मैर् (for धनैर्) —G2 om (hapl) from the post half of line 1352 up to the prior half of line 1354 D10 T2 om (hapl) lines 1353–1354 T1 om (hapl) line 1354 —(L 1354) T3 G1 2 4 M परराष्ट्राभिघातने (for the post half) —(L 1355) T2 यत (for तत्) —(L 1356) T1 G1 3 M1 4 च (for वा) —(L 1358) M1 2 तस्य (for स्वस्य) T1 राज्यस्य (for राष्ट्रस्य) —(L 1360) G1–3 M विमानेन (for °ने तु) T1 G1–3 M सेवित (for °ते) —(L 1362) G1 2 च (for -स्युस्) —(L 1365) M2 3 राजपुत्रो (for °मात्रो) —(L 1366) D10 T G M1 तस्मात्तत्नेन कर्तव्य (for the prior half) D10 T G M1 4 -पालन (for °ने) —(L 1367) T1 व्यवहारविचारश्च (for the prior half) —(L 1368) T2 M1 प्रमादश् (for प्रमोदश्) T1 [अ]तन्द्रिता (for [अ]चण्डता) —(L 1371) T1 एव श्रेयो (for श्रेय एव) —Colophon —*Adhy name* D10 T2 3 G3 उमामहेश्वरसवादे राष्ट्ररक्षणफलवर्णन, M उमामहेश्वरसवाद —*Adhy no* D10 T2 3 G2 4 198, G1 3 M1 192, M2 3 193, M4 191 —T1 महेश (for महेश्वर) —(L 1373) D10 T3 G निबध्य (for निबद्धा) —(L 1374) T1 -विधूतास् (for -विपू°) —(L 1375) T2 भक्षेषु (for -भागेषु) —(L 1377) G3 om (hapl) तुष्टेषु G1 3 तत् (for यत्) T1 यज्ञभागस्य यत्फल (for the post half) —T1 om lines 1379–1381 —(L 1379) D10 T2 3 G च (for स) D10 T2 3 G पित्रा च, M4 स पित्रा (for स पितृ-) —(L 1381) D10 T2 3 G किं भूय श्रोतुमिच्छसि (for the post half) —T1 om lines 1382–1388 —(L 1383) G1–3 -वासिनां (for मेधिनाम्) —T3 G1 3 om (hapl) the post half of line 1384 and the prior

तयोरपि यथायोग न्यायत कर्मवेतनम् ।
आजीवेभ्योऽपि सर्वेभ्यश्चार्जवाद्वेतन हरेत् । [ 1430 ]
अनार्जवाद्धरतस्तत्तु पापाय कल्पते ।
सर्वेषा पूर्वमारम्भाश्चिन्तयेन्नयपूर्वकम् ।
आत्मशक्तिमुपायाश्च देशकालौ च शक्तित ।
कारणानि प्रवास च प्रक्षेप च फलोदयम् ।
एवमादीनि सचिन्त्य दृष्ट्वा दैवानुकूलताम् । [ 1435 ]
अत पर समारम्भेद्यत्रात्महितमाहितम् ।
वृत्तिमेव समासाद्य ता सदा परिपालयेत ।
दैवमानुषविघ्नेभ्यो न पुनर्भ्रंश्यते यथा ।
पालयन्वर्धयन्भुञ्जना प्राप्य न विनाशयेत् ।
क्षीयते गिरिसकाशमश्नतो ह्यनपेक्षया । [ 1440 ]
आजीवेभ्यो धनं प्राप्य चतुर्धा विभजेद्बुध ।
धर्मायार्थाय कामाय आपत्प्रशमनाय च ।
चतुर्ष्वपि विभागेषु विधान शृणु शोभने ।
यज्ञार्थं चान्नदानार्थं दीनानुग्रहकारणात् ।
देवब्राह्मणपूजार्थं पितृपूजार्थमेव च । [ 1445 ]
कुलार्थं सनिवासार्थं क्रियानित्यैश्च धार्मिकै ।
एवमादिषु चान्येषु धर्मार्थं सत्यजेद्धनम् ।
धर्मकार्ये धन दद्यादनपेक्ष्य फलोदयम् ।
ऐश्वर्यस्याभिलाभार्थं राजवाल्लभ्यकारणात् ।
वार्त्तायां च समारम्भे भृत्यमित्रपरिग्रहे । [ 1450 ]
आवाहे च विवाहे च पुत्राणा वृत्तिकारणात् ।
अर्थोदयसमाप्ताशावनर्थस्य विवादने ।

एवमादिषु चान्येषु अर्थार्थं विभजेद्धनम् ।
अनुबन्ध फल हेतु दृष्ट्वा वित्त परित्यजेत् ।
अनर्थं बाधते ह्यर्थो अर्थं चैव फलान्युत । [ 1455 ]
नाधना प्राप्नुवन्त्यर्थान्नरा यत्नशतैरपि ।
तस्माद्धन रक्षितव्य दातव्य च विधानत ।
शरीरपोषणार्थाय आहारस्य विशेषणे ।
नटगान्धर्वसयोगे कामयात्राविहारयो ।
मन प्रियाणा सयोगे प्रीतिदाने तथैव च । [ 1460 ]
एवमादिषु चान्येषु कामार्थं विसृजेद्धनम् ।
विचार्य गुणदोषौ तु मात्रया तत्र सत्यजेत् ।
चतुर्थं सनिदध्याच्च आपदर्थं शुचिस्मिते ।
राज्यभ्रशविनाशार्थं दुर्भिक्षार्थं च शोभने ।
महाव्याधिविमोक्षार्थं वार्द्धकस्यैव कारणात् । [ 1465 ]
शत्रुणा प्रतिकाराय साहसैश्चाप्यमर्षणात् ।
प्रस्थाने चान्यदेशार्थमापदा विप्रमोक्षणे ।
एवमादि समुद्दिश्य सनिदध्यात्स्वक धनम् ।
सुखमर्थवता लोके कृच्छ्राणा विप्रमोक्षणम् ।
यस्य नास्ति धन किंचित्तस्य लोकद्वय न च । [ 1470 ]
अशनादिन्द्रियाणीव सर्वमर्थात्प्रवर्तते ।
निधान मात्रया कुर्यादन्यथा विलय व्रजेत् ।
एव देवि मनुष्याणा लोके स्वाजीवन प्रति ।
एव युक्तस्य लोकस्य लौक्य वृत्त पुन शृणु ।
धन्य यशस्यमायुष्य स्वर्गीय परम वच । [ 1475 ]
त्रिवर्गे च यथा युक्त सर्वेषा सविधीयते ।

— T1 om line 1427 — ( L 1430 ) G1 2 4 हि ( for ऽपि ) D10 T2 3 G स्वार्जवाद् ( for चा ) — ( L 1432 ) T3 न तेषा ( for सर्वेषा ) G2 आरभ ( for आरम्भान् ) G2 चात्म ( for नय ) — T1 om line 1433 — ( L 1433 ) D10 T2 G-4 युक्ति ( for श° ) — ( L 1434 ) T1 2 G1-3 M प्रदास ( for प्रवास ) — ( L 1435 ) D10 T3 G1 4 देवानु ( for दै° ) — ( L 1436 ) T1 यत्नात्म- ( for यत्रात्म ) — ( L 1437 ) T2 G3 4 एव ( for एव ) — T1 om lines 1438–1440 — ( L 1438 ) T2 G1 दृश्यते, T2 त्रुप्यते, G3 नश्यते ( for भ्रश्यते ) G4 तथा ( for यथा ) — ( L 1443 ) T1 2 G1 मोचने ( for शोभने ) — ( L 1444 ) M1 पान- ( for चान्न ) — ( L. 1446 ) D10 T3 G1 मूल्यार्थं ( for कुलार्थं ) M1 कुल्यार्थं सनिपातार्थं ( for the prior half ) — T1 om lines 1447–1456 — ( L 1447 ) G2 om चान्येषु T2 अथार्थ विसृजेद्धन ( for the post half ) — ( L 1450 ) M1 वार्त्तायाद् ( for °या ) D10 T2 G1 भृत्यामात्य , G1 मातृमित्र ( for भृत्यमित्र ) G2 अमात्यमपरिग्रहौ ( for the post half ) — ( L 1451 ) M1 वृद्धि- ( for वृत्ति ) — ( L 1453 ) D10 T2 3 G विसृजेद् ( for विभ° ) — ( L 1454 ) T2 2 G1 हेतुयुक्त ( for फल हेतु ) — ( L. 1455 ) D10 G3 4 M1 3 ह्यर्थ ( for अर्थं ) — ( L 1456 ) D10 T2 3 G3 4 अर्थ ( for अर्थान् ) D10 यत्न- ( for यत्न ) — ( L 1457 ) T1 तथा नरै ( for विधानत ) — ( L 1458 ) G1-3 शरीरपोषणार्थं च ( for the prior half ) — T1 om. lines 1459 and 1461 — ( L 1461 ) G1 2 अथार्थं ( for कामार्थं ) — ( L. 1462 ) D10 T2 3 G प्रयाणां ( for मात्रया ) — ( L 1464 ) T1 तथा धन ( for च शोभने ) — T1 om the post half of line 1466 and the prior half of line 1467 — ( L 1466 ) G1-3 -घाताय ( for -काराय ) — ( L 1467 ) T1 प्रवि- ( for विप्र- ) — T1 om lines 1469 and 1471–1477 — ( L 1471 ) T2 G1 [इ]द्द ( for [इ]न्द्र ) D10 G1 प्रवर्तयेत् ( for °ते ) — ( L 1472 ) D10 T2 3 G नि( D10 वि )धानमात्र यत्नेषाम् ( T2 य कुर्याद् ) ( for the prior half ) — ( L 1473 ) G1 3 एवमादि ( for एव देवि ) D10 T2 3 G2 4 लोकानां जीवन प्रति , G1 3 लोके सजीवन प्रति ( for the post. half ) — ( L 1474 ) D10 T2 3 G2-4 एव लोकस्य वृत्त( G3 युक्त )स्य ( for the prior half ) D10 T2 2 G1 लोक- ( for लौक्य ) — ( L 1475 ) G1-3 स्वर्ग्यं च ( for स्वर्गीय ) D10 T2 3

तथा सवर्तमानास्तु लोकयोर्हितमाप्नुयु ।
काल्योत्थान च शौच च देवब्राह्मणभक्तता ।
गुरूणामेव शुश्रूषा ब्राह्मणेष्वभिवादनम् ।
प्रत्युत्थान च वृद्धानां देवस्थानप्रणामनम् । [ 1480 ]
आभिमुख्य पुरस्कृत्य अतिथीना च भोजनम् ।
वृद्धोपदेशकरण श्रवण हितपथ्ययो ।
पोषण भृत्यवर्गस्य सान्त्वदानपरिग्रहैः ।
न्यायत कर्मकरणमन्यायाहितवर्जनम् ।
सम्यग्वृत्त स्वदारेषु दोषाणां प्रतिषेधनम् । [ 1485 ]
पुत्राणा विनय कुर्यात्तत्तत्कार्ये नियोजयेत् ।
वर्जन चाशुभार्थाना शुभानां जोषण तथा ।
कुलोचिताना धर्माणा यथावत्परिपालनम् ।
वर्जन कलहादीनां भक्त्या सह सहा तथा ।
मता व्यसनसयोगे स्वदारस्याभ्युपपत्तिता । [ 1490 ]
दीनानां सग्रह चैव नानृशंस्यव्यपेक्षया ।
अयद्वानृतघोराणां वचनाना विवर्जनम् ।
कुलसधारण चैव पौरुषेणैव सर्वदा ।
एवमादि शुभ सर्वं तस्य वृत्तमिति स्मृतम् ।
वृद्धसेवी भवेन्नित्य हितार्थं ज्ञानकाङ्क्षया । [ 1495 ]
परार्थं नाहरेद्द्रव्यमनामन्त्र्य तु सर्वदा ।
न याचेत परान्धीर स्वबाहुबलमाश्रयेत् ।
स्वशरीर सदा रक्षेदाहाराचारयोरपि ।
हित पथ्य सदाहार जीर्णे भुञ्जीत मात्रया ।
[illegible] कृत्वा सर्वं यथाविधि । [ 1500 ]
[illegible] न च भाषेत विप्रियम् ।
प्रतिश्रय च [illegible] सर्वतः ।
[illegible] पोषयेत् ।
[illegible] क्रिया ।
[illegible] गमन नैव रोचयेत् । [ 1505 ]
[illegible] समभावयेत् ।
[illegible] प्रतिपत्तिः ।
[illegible] ।
[illegible] ।
वृद्धिपूर्व [illegible] गृहमेधिनः । [ 1510 ]
[illegible] शुभ [illegible] ।
[illegible] शुभाशुभे ।
[illegible] पावकम् ।

[illegible]

उमा ।

[illegible] ।
इमे तु [illegible] । [ 1515 ]
[illegible] महेश्वर ।
एष मे [illegible] ।

महेश्वर ।

[illegible] ।
[illegible] समागमम् ।

---

G4 स्वर्गं न परम यश (for the post half) —(L 1476) G1 4 वर्गो हि (for °वर्गे च) D10 T3 G 3 M4 त्रिवर्गो हि (M1 °र्गोऽपि) वशे युक्त (for the prior half) —(L 1477) T2 तथा सवर्तमानस्तु (for the prior half). T1 आमुयात् (for °यु) —(L 1478) G3 4 कार्योत्थान (for का°) D10 T2 3 G1-3 भक्तित (for भक्तता) —(L 1479) G3 अपि (for एव) —(L 1481) D10 T G1-4 M4 पूजन (for भो°) —(L 1484) T3 G1-3 °वर्जित (for °र्जनम्) —(L 1485) G2 दोष प्रति निवर्तन (for the post. half) —(L 1486) M नियोजन (for °जयेत्) D10 T G3 4 तत्तत्कार्यनियोजनम् (for the post half) —T1 om line 1487 D10 T G M4 om (hapl) lines 1489-1492 —(L 1493) G4 च (for the second [ए]व) —T1 om line 1494 —(L 1494) D10 इह (for इति) D10 T3 G1 नित्य (for स्मृतम्) —(L 1495) G1 3 हितार्थी (for °र्थं) —G2 om lines 1496-1500 —(L 1496) T1 परस्व नाहरेद्विद्वान् (for the prior half) T1 om the post. half and the prior half of line 1497 —(L 1499) M1-3 सदाहाराज् (for °हार) M1-3 जीर्णो (for जीर्णे) —(L 1502) D10 T1 2 G1 2 4 M1 [illegible], T1 [illegible] (for [illegible]) —T1 om line 1503 —(L 1503) D10 T2 G2-4 M4 [illegible] —(L 1504) D10 T G2-4 M4 [illegible] (for [illegible]) —(L 1505) G1-3 [illegible] (for [illegible]) T1 [illegible] (for [illegible]) —T1 om lines 1506-1511 —(L 1506) D10 T2 G M4 [illegible] (for °[illegible]) D1 T2 G [illegible] (for the post. half) —(L 1507) G1 न, G2 [illegible] (for [illegible]) D10 T2 G3 4 [illegible], G2 °[illegible] (for °[illegible]) —(L 1509) T2 3 G1 3 4 M4 [illegible] (by transp) —(L 1510) G1 3 M4 पुत्रो (for पू°) —(L 1511) M1 2 [illegible] (for [illegible]) —(L 1512) D10 T G M3 [illegible] (for आत्मा) T1 [illegible] (for the post half) —Colophon —*Adhy name* D10 T2 3 G2 M [illegible] —*Adhy no* D10 T2 3 G2 4 M3 199, T1 G1 3 M1 193, M2 194, M4 191 —(L 1515) D10 T2 3 G1 [illegible], G1 3 न [illegible] (for तु [illegible]°) D10 T2 G2-4 M4 [illegible], T1 [illegible] (for [illegible]) —After line 1515, T1 ins

धर्मदानोपदेशा या मर्तव्यमिति निश्चय ।
इति ते कथित देवि किं भूय श्रोतुमिच्छसि । [ 1615 ]

Colophon

उमा ।

भगवन्देवदेवेश त्रियक्ष वृषभध्वज ।
मानुषास्त्रिविधा देव दृश्यन्ते सतत विभो ।
आसीना एव भुञ्जन्ते स्थानैश्वर्यपरिग्रहैं ।
अपरे यत्नपूर्वं तु लभन्ते भोगमग्रहम् ।
अपरे यतमानास्तु लभन्ते न तु किंचन । [ 1620 ]
केन कर्मविपाकेन तन्मे शसितुमर्हसि ।

महेश्वर ।

न्यायतत्त्व महाभागे श्रोतुकामासि भामिनि ।
ये लोके मानुषा देवि दानधर्मपरायणा ।
पात्राणि विधिवज्ज्ञात्वा दूरतो ह्यनुमानत ।
अभिगम्य स्वय तत्र ग्राहयन्ति प्रसाद्य च । [ 1625 ]
दानानि चेङ्गितैरेव तैरविज्ञातमेव वा ।
पुनर्जन्मनि देवेशि तादृशा शोभना नरा ।
अयत्नतस्तु तान्येव फलानि प्राप्नुवन्त्युत ।
आसीना एव भुञ्जन्ते भोगान्सुकृतभोगिन ।
अपरे ये च दानानि ददत्येव प्रयाचिता । [ 1630 ]
यथा यथा ते दीनत्वात्पुनर्दास्यन्ति याचिता ।
तावत्काल तथा देवि पुनर्जन्मनि ते नरा ।
यतत श्रमसंयुक्ता पुनस्तान्याप्नुवन्त्युत ।
याचिता अपि ये केचिन्न ददत्येव किंचन ।
अभ्यसूयापरा मर्त्या लोभोपहतचेतस । [ 1635 ]
ते पुनर्जन्मनि शुभे यतन्ते बहुधा नरा ।
न प्राप्नुवन्ति मनुजा मार्गन्तस्तेऽपि किंचन ।
नानुप्त रोहते सस्य तद्वद्दानफल विदु ।
यद्यद्ददाति पुरुषस्तत्तत्प्राप्नोति केवलम् ।
इति ते कथित देवि भूय श्रोतु किमिच्छसि । [ 1640 ]

उमा ।

भगवन्भगनेत्रघ्न केचिद्वार्द्धकसंयुता ।
अभोगयोग्यकाले तु भोगाश्चैव धनानि च ।
लभन्ते स्थविरा भूत्वा भोगैश्वर्य यतस्तत ।
येन कर्मविपाकेन तन्मे शसितुमर्हसि ।

महेश्वर ।

हन्त ते कथयिष्यामि शृणु तत्त्व समाहिता । [ 1645 ]
धर्मकार्यं चिर काल विस्मृत्य धनसयुता ।
प्राणान्तकाले सप्राप्ते व्याधिभिश्च निपीडिता ।
आरभन्ते पुनर्धर्म दातु दानानि वा नरा ।
ते पुनर्जन्मनि शुभे भूत्वा दु खपरिप्लुता ।
अतीतयौवने काले स्थविरत्वमुपागता । [ 1650 ]
लभन्ते पूर्वदत्ताना फलानि शुभलक्षणे ।
एव कर्मफल देवि कालयोगाद्भवत्युत ।

---

(for हृत धनम्) —(L 1611) T3 दै (for ये) —(L 1613) D10 T2 3 G1 3 4 M4 विहीनाश (for -वियुक्ताश्) T1 एते धर्मविहीनाश्च (for the prior half) —(L 1614) T1 धर्म (for धन) — Colophon *Sub-parvan* M1-3 दानधर्म — *Adhy name* D10 उमामहेश्वरसंवादे भोगानुभव विधि, T2 3 उमामहेश्वरसंवादे भोगाभोगविधि, G2 उमामहेश्वरसंवादे भोगविधि, M उमामहेश्वरसंवाद — *Adhy no* D10 T2 3 G2 4 200, T1 G1.3 M1 194, M2 3 195, M4 192 —(L 1616) M2 3 त्र्यक्ष (submetric) (for त्रियक्ष) —(L 1619) T2 लभते (for °न्ते) G1 3 M -मत्रहान् (for °हम्) —(L 1620) G1.3 इतरे (for अपरे) D10 T G1-3 M4 च (for the first तु) —(L 1621) T2 धर्म (for कर्म) — T1 महेश, G2 शिव (for महेश्वर) — T1 om line 1622 —(L 1622) T2 3 M3 मानिनी —(L 1623) T2 G2 लोका (for लोके) D10 मानुषे (for °षा) —(L 1624) D10 T G M4 [s]पि (for हि) — T2 reads lines 1625-1628 after line 1633 —(L 1625) T1 ग्राहयित्वा (for °यन्ति) —(L 1626) D10 दानादि (for °नि) T2 G1.2 एव (for -इति-) —(L 1627) D10 T G1 2 4 ते दवि, G3 ते दत्त्वा (for देवेशि) —(L 1628) T2 तान्देवि (for तान्येव) — G3 om (hapl.) lines 1629-1633 —(L 1630) D10 अपरेण च, T1 °रे नैव, T2 °रे चापि (for °रे ये च) — D10 M4 om (hapl) line 1631 —(L 1631) T1 तथा (for the second यथा) T2 3 G1 2 4 यदा यदाधिने (T2 °नो) दत्त्वा (for the prior half) T2 3 G1 3 4 दान च (for दास्यन्ति) —(L 1632) D10 T2 3 G1 3 4 ततो (for तथा) —(L 1633) D10 T1 2 G1 2 4 पुनस्तान्प्राप्नुवन्ति च (for the post half) —(L 1634) T3 मन, G1 3 M1 2 4 त्वपि (for अपि) T2 3 G1 2 4 केचित्तु (for ये केचिन्) D10 G2 तु ददत्येव किंचन, T1 2 ददत्येव न किंचन, G1 3 4 अदत्त्वैव कथचन (for the post half) —(L 1635) G2 अनसूयापरा मर्त्या (for the prior half) —(L 1636) T1 G1-3 M यतते (for यतन्ते) —(L 1640) D10 T1 2 G2 4 किं भूय श्रोतुमिच्छसि (for the post half) —(L 1641) D10 T1 G M4 वार्धक्य, T3 वा धर्म (for वार्द्धक-) —(L 1643) T3 G1 3 4 M4 भूता (for भूत्वा) T1 भोगैश्वर्ययुतास्तत (for the post half) — T1 महेश (for महेश्वर) —(L 1648) D10 धमान् (for धर्म) — G4 om (hapl.) lines 1650-1653 G2 om (hapl) lines

एवंयुक्तसमाचारा पुनर्जन्मनि ते नराः ।
दुर्भगा मभवन्त्येव स्त्रीणां हृदयविप्रियाः । [ 1700 ]
नास्ति तेषां रतिसुखं स्वदारेष्वपि किंचन ।

Colophon

उमा ।

भगवन्देवदेवेश मानुषेष्वेव केचन ।
ज्ञानविज्ञानसंपन्ना बुद्धिमन्तो विचक्षणाः ।
दुर्गतास्तु प्रदृश्यन्ते यतमाना यथाविधि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि । [ 1705 ]

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
ये पुरा मनुजा देवि श्रुतवन्तोऽपि केवलम् ।
निराश्रया निराद्याश्च भृशमात्मपरायणाः ।
ते पुनर्जन्मनि शुभे ज्ञानबुद्धियुता अपि ।
निष्किंचना भवन्त्येव अनुप्तं न हि रोहति । [ 1710 ]

उमा ।

मूर्खा लोके प्रदृश्यन्ते दृढं मूढा विचेतसः ।
ज्ञानविज्ञानरहिताः समृद्धाश्च समन्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि बालिशा अपि सर्वतः ।
समाचरन्ति दानानि दीनानुग्रहकारणात् । [ 1715 ]
अबुद्धिपूर्वं वदतां ददत्येव यतस्ततः ।
ते पुनर्जन्मनि शुभे प्राप्नुवन्त्येव तत्तथा ।
पण्डितोऽपण्डितो वापि भुङ्क्ते दानफलं नरः ।
बुद्ध्यानपेक्षितं दानं सर्वथा तत्फलंयुतम् ।

उमा ।

भगवन्देवदेवेश मानुषेष्वेव केचन । [ 1720 ]
मेधाविनः श्रुतिधरा भवन्ति विशदाक्षराः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि गुरुशुश्रूषका भृशम् ।
ज्ञानार्थं ते तु संगृह्य तीर्थतो विधिपूर्वकम् ।
विधिनैव परांश्चैव ग्राहयन्ति न चान्यथा । [ 1725 ]
अश्लाघमाना ज्ञानेन प्रशान्ता यतवाचकाः ।
विद्यास्थानानि ये लोके स्थापयन्ति च यत्नतः ।
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
मेधाविनः श्रुतिधरा भवन्ति विशदाक्षराः ।

उमा ।

अपरे मानुषा देव यत्नतोऽपि यतस्ततः । [ 1730 ]
बहिष्कृता प्रदृश्यन्ते श्रुतविज्ञानबुद्धिभिः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि ज्ञानदर्पसमन्विताः ।
श्लाघमानाश्च तत्प्राप्य ज्ञानाहंकारमोहिताः ।
तपन्ति ये पराञ्जित्य ज्ञानाधिक्येन दर्पिताः । [ 1735 ]
ज्ञानादसूयां कुर्वन्ति न सहन्त्येव चापरान् ।
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
मानुष्यं सुचिरं प्राप्य तत्र बोधविवर्जिताः ।
भवन्ति सततं देवि यतन्तो हीनमेधसः ।

उमा ।

भगवन्मानुषाः केचित्सर्वकल्याणसंयुताः । [ 1740 ]

---

— (L 1688) $T_2$ -मातिनश् (for -चार्मिन्श्) — (L 1692) $D_{10}$ $G_4$ आद्या, $T_3$ आय (for आदया) — (L 1695) $T_1$ दर्पात् (for देवि) — $T_1$ om line 1698 — (L 1698) $G_{1-3}$ निरानन्दा (for निराद्याश्च) — (L 1700) $D_{10}$ तु (for स) — (L 1701) $T_1$ किं पुन (for किंचन) — Colophon — *Adhy name* $D_{10}$ $T_3$ $G_2$ $M_{1.2.4}$ उमामहेश्वरसंवादः — *Adhy no* Dn $T_{2.3}$ $G_{2.4}$ $M_3$ 201, $T_1$ $G_{1.3}$ $M_1$ 195; $M_2$ 196, $M_4$ 193 — (L 1702) $D_{10}$ $G_{1.3.4}$ [अ]पि (for [ए]व) — $T_1$ महेश (for महेश्वर) — $T_3$ om (hapl) from the post half of line 1707 up to the prior half of line 1714 — (L 1710) $D_{10}$ $T_2$ G M हि न (by transp), $T_1$ न प्र- — (L 1711) $D_{10}$ $G_{2.4}$ दृढमूढा, $T_2$ $G_{1.3}$ दृढा मूढा, $M_{1.3}$ दृढ मूढ (for दृढ मूढा) — (L 1714) $M_1$ सर्वशः (for °तः) — (L 1716) $D_{10}$ $T_2$ $G_4$ या दातु, $T_{1.3}$ यद्दान, $G_{1.3}$ ये दातु, $G_2$ यद्दातु (for वदतां) $G_{1.3.4}$ च (for [ए]व) $T_3$ ततस् (for यतस्) — (L 1719) $T_1$ $G_{1.3}$ M बुद्धि ना($T_1$ °द्धिनां)पेक्षते दान (for the prior half) — (L 1720) $D_{10}$ $T_3$ $G_{1.3.4}$ च केचन, $G_2$ कदाचन (for [ए]व केचन) — (L 1721) $T_1$ $G_{1.3.4}$ M श्रुत- (for श्रुति-) — $G_2$ om (hapl.) lines 1722–1729 — (L 1725) $T_3$ विधि दैव (for विधिनैव) $D_{10}$ $T_3$ च न (by transp). — (L 1726) $M_4$ -वाचिकाः — (L 1729) $G_{1.3}$ M श्रुतधरा (for श्रुति°) — $G_2$ शिव (for उमा) — (L 1731) $T_3$ श्रुति- (for श्रुत) $G_{1.3}$ बुद्धितः (for °भिः) $D_{10}$ $T_2$ $G_{2.4}$ ज्ञान($G_4$ श्रुति)विज्ञानबुद्धितः ($T_2$ °क्षयः) (*for the post half*) — $T_1$ महेशः (*for* महेश्वरः) — (L 1734) $G_{1.3}$ प्राप्ता (for प्राप्य) — (L 1735) $D_{10}$ $T_{2.3}$ $G_2$ वदन्ति, $G_{1.3.4}$ भवति, $M_4$ पतति (for तपन्ति) — (L 1736) $D_{10}$ $G_2$ च (for [ए]व) — (L 1738) $D_{10}$ T G सुचिरात् (for °र) $G_{1.3}$ सदा

पुत्रैर्दारैर्गुणयुतैर्दासीदासपरिच्छदैः ।
परस्परर्द्धिसयुक्ताः स्वानैश्वर्यपरिग्रहैः ।
व्याधिहीना निराबाधा रूपारोग्यबलैर्युताः ।
धनधान्येन सपन्ना प्रासादैर्यानवाहनैः ।
सर्वोपभोगसयुक्ता नानाचित्रैर्मनोहरैः । [ 1745 ]
ज्ञातिभि सह मोदन्ते अविघ्न तु दिने दिने ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ।
ये पुरा मनुजा देवि आढ्या वा दुर्गतेऽपि वा ।
श्रुतवृत्तसमायुक्ता दानकामा श्रुतप्रिया । [ 1750 ]
परेङ्गितपरा नित्यं दातव्यमिति निश्चिता ।
सत्यसधा क्षमाशीला लोभमोहविवर्जिता ।
दातार. पात्रतो दान सदैर्नियमसयुता ।
स्वदु खमिव सस्मृत्य परदुःख महात्मन ।
सौम्यशीला शुभाचारा देवब्राह्मणपूजका । [ 1755 ]
एवंयुक्तसमाचारा पुनर्जन्मनि शोभने ।
दिवि वा भुवि वा देवि जायन्ते कर्मभोगिन ।
मानुषेष्वपि ये जातास्तादृशा सभवन्ति ते ।
यादृशास्तु त्वया प्रोक्ता सर्वे कल्याणसयुता ।
रूपं द्रव्य बल चायुर्भोगैश्वर्यं कुल श्रुतम् । [ 1760 ]
इत्येतत्सर्वसाद्गुण्यं दानाद्भवति नान्यथा ।
तपोदानमय सर्वमिति विद्धि शुभानने ।

उमा ।

अथ केचिन्नदृश्यन्ते मानुषेष्वेव मानुषा. ।
दुर्गता: प्रेष्यभूयिष्ठा दानभोगविवर्जिता: ।
अथैस्त्रिभि: सन्त युक्ता व्याधिदुःखप्रपीडिता । [ 1765 ]
दुष्कुलाभिभूताश्च सतत विषाददीना ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

ये पुरा मनुजा देवि आसुरं भावमाश्रिता ।
लोभमोहरता नित्यं निराशाश्च निष्क्रिया ।
नास्तिकाश्चैव धूर्ताश्च मूर्खाश्चात्मपरायणा । [ 1770 ]
परोपतापिनो देवि प्रायश प्राणिनिर्दया ।
एवयुक्तसमाचारा पुनर्जन्मनि शोभने ।
कथंचित्प्राप्य मानुष्यं तत्र ते दु खपीडिता ।
सर्वतः सभवन्त्येव पूर्वमात्मकृतात्मना ।
यथा ते पूर्वकथित तथा ते संभवन्त्युत । [ 1775 ]
शुभाशुभं कृत कर्म सुखदुःखफलोदयम् ।
इति ते कथित देवि किं भूय श्रोतुमिच्छसि ।

Colophon

उमा ।

भगवन्देवदेवेश मम प्रीतिविवर्धन ।
जात्यन्धाश्चैव दृश्यन्ते जाता वा नष्टचक्षुष ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि । [ 1780 ]

महेश्वर ।

हन्त ते कथयिष्यामि शृणु कल्याणि कारणम् ।
ये पुरा कामरागेण परवेश्मसु लोलुपा ।
परस्त्रियोऽभिवीक्षन्ते दुष्टेनैव स्वचक्षुषा ।
अन्धीकुर्वन्ति ये मर्त्यान्क्रोधलोभसमन्विता ।

---

(for तत्र). — (L. 1742) G1 ₂ परम बुद्धिसयुक्ता (for the prior half) D10 G1 om (hapl) from the post half up to the prior half of line 1745 T2 -मनोहरै (for -परिग्रहै) — (L 1743) T1 रूपद्रव्य (for रूपारोग्य-) — (L 1745) G2 om the post half. M1-₃ -नानाचित्र (for चित्रैर्) — T1 महेश (for महेश्वर) — (L.1750) T2 श्रुति (for श्रुत-) — (L 1751) T2 पर हित- (for परेङ्गित-) — (L 1753) T2 नित्य (for दानं) T1 ₂ वृत्तैर्विनयसंयु( T2 °यु )ता (for the post. half) — (L 1754) D10 T2 ₂ G M परदु खविवर्जि( T2 °समन्वि )ता (for the post. half). — (L 1756) D10 T2 ₂ G -शील (for -युक्त). — (L 1757) T1 भोगयुक्ता भवन्त्यपि (for the post. half). — T1 om lines 1758–1759. — (L 1758) T2 जाता चे (by transp) — (L 1759) T2 G1. ₂ तथा (for त्वया) D10 G2 M1-₃ सर्व- (for सर्वे) — (L 1760) T2 वय, G2 बल (for कुल) — (L. 1761) T2 [ए]वं (for [ए]तद्). T1 ₂ सर्वमाद्गुण्य — T1 om line 1762 — (L. 1764) T1 -कुला (for भूयिष्ठा) T1 भूयिष्ठ दानवर्जिता (for the post. half) — (L 1765) D10 T1 ₂ G2 M2 समायुक्ता, T2 सता युक्ता, G1 ₂. ₄ सनाविष्टा (for सन्त युक्ता). D10 T G M1 -संयुता (for पीडिता) — (L. 1766) G1. ₂ -कर्शिता (for -दर्शना) — T1 महेश (for महेश्वर) — (L. 1769) D10 T2 ₂ G समायुक्ता; T1 -युक्ता नित्य (for -रता नित्य) — T1 om line 1770 T1 reads line 1771 after line 1774 — (L 1771) G1-₃ -निर्दया (for -निर्दया). — (L 1775) D10 T2 G M1 -कथितास् (for °त). — T1 om line 1776 — (L 1777) G1 ₂ ₄ M1 भूय श्रोतु किमिच्छसि (for the post. half) — Colophon — *Adhy name* D10 T2 ₂ G2 M उमामहेश्वरसवाद — *Adhy no* D10 T2 ₂ G2 ₄ M2 202, T1 G1 ₂ M1 196, M3 197, M4 194 — T1 महेश, G2 शिव (for महेश्वर) — T1 om line 1781 — (L 1782) T1 ₂ G1 ₂ ₄ M1 ₄ कामकारेण (for °रागेण) D10 T2 ये पुरा कर्म कारेण (for the prior half) — (L. 1784) D10 T

लक्षणज्ञाश्च रूपेषु अयथावत्प्रदर्शका । [1785]
एवंयुक्तसमाचाराः कालधर्मगतास्तु ते ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
यदि चेन्मानुषं जन्म लभेरंस्तादृशा नराः ।
स्वभावतो वा जाता वा अन्धा एव भवन्ति ते ।
अक्षिरोगयुता वापि नास्ति तत्र विचारणा । [1790]

उमा ।

मुखरोगयुताः केचित्क्लिश्यन्ते सततं नराः ।
दन्तकर्णकपोलस्थैर्व्याधिभिर्बहुपीडिताः ।
आदिप्रभृति मर्त्या वा जाता वाप्यथ कारणात् ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वर ।

हन्त ते कथयिष्यामि शृणु देवि समाहिता । [1795]
दुर्वक्तारस्तु ये देवि जिह्वया कटुकं भृशम् ।
असत्यं परुषं घोरं गुरून्प्रति परान्प्रति ।
जिह्वाबाधां तथान्येषां कुर्वते कोपकारणात् ।
प्रायशोऽनृतभूयिष्ठा नराः कार्यवशेन वा ।
तेषां जिह्वाप्रदेशस्था व्याधयः संभवन्ति ते । [1800]
कुश्रोतारस्तु ये चार्थं परेषां कर्णनाशकाः ।
कर्णरोगान्बहुविधाँल्लभन्ते ते पुनर्भवे ।
दन्तरोगशिरोरोगकर्णरोगास्तथैव च ।
अन्ये मुखाश्रिता दोषाः सर्वे स्वात्मकृतं फलम् ।

उमा ।

पीड्यन्ते सततं देव मानुषेष्वेव केचन । [1805]
कुक्षिपक्षाश्रितैर्दोषैर्व्याधिभिश्चोदराश्रितैः ।
तीक्ष्णशूलैश्च पीड्यन्ते नरा दुःखपरिप्लुताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वर ।

ये पुरा मनुजा देवि कामक्रोधयुता भृशम् ।
आत्मार्थमेव चाहारं भुञ्जते निरपेक्षकाः । [1810]
अभक्ष्याहारदाश्चैव विश्वस्तानां विषप्रदाः ।
अभक्ष्यभक्ष्यदाश्चैव शौचमङ्गलवर्जिताः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कथंचित्प्राप्य मानुष्यं तत्र ते व्याधिपीडिताः ।
तैस्तैर्बहुविधाकारैर्व्याधिभिर्दुःखपीडिताः । [1815]
भवन्त्येव तथा देवि यथा येन कृतं पुरा ।

उमा ।

दृश्यन्ते सततं देव व्याधिभिर्मेहनाश्रितैः ।
पीड्यमानास्तथा मर्त्या अश्मरीशर्करादिभिः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वर ।

ये पुरा मनुजा देवि परदारप्रधर्षकाः । [1820]
तिर्यग्योनिषु धूर्ता वै मैथुनार्थं चरन्ति च ।
कामदोषेण ये धूर्ताः कन्यासु विधवासु च ।
बलात्कारेण गच्छन्ति रूपदर्पधनान्विताः ।
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः । [1825]
तत्र मेहनजैर्घोरैः पीड्यन्ते व्याधिभिः प्रिये ।

उमा ।

भगवन्मानुषाः केचिद्दृश्यन्ते शोषिणः कृशाः ।

---

$M_4$ ये मर्त्या, G यन्मत्या (for ये मत्यान्) — $T_1$ om line 1785 — (L 1785) $M_4$ लक्षणज्ञापि (for °ज्ञ) — (L 1786) $D_{10}$ $T_{2.3}$ G -वशास् (for गतास्) — (L 1787) $T_1$ मना बहु (for चिरं प्रिये) — (L 1788) $D_{10}$ T G $M_4$ लभेरंस्ते तथापि वा ($T_1$ $M_4$ °विधा) (for the post half) — (L 1789) $G_{1-3}$ [इ]न (for ते) — (L 1791) $D_{10}$ T $G_{1.3.4}$ दृश्यन्ते, $G_2$ $M_4$ वीर्यन्त (for क्लिश्यन्ते) — (L 1792) $T_1$ कपोलस्थ- (for °स्थैर्) $G_{1-3}$ M नृप- (for बहु-) — (L 1793) $D_{10}$ $T_{2.3}$ $G_4$ वै मर्त्या, $T_1$ $G_{1-3}$ $M_4$ वा मर्त्या (by transp) — (L 1795) $T_1$ शृणु कल्याणकारण (for the post half) — (L 1796) $T_1$ ते, $G_4$ om (for ये) $D_{10}$ $G_2$ जिह्वायां $G_4$ $M_4$ जिह्वाया (for जिह्वया) $T_2$ $G_{2.4}$ कटुका (for °क) — (L 1797) $D_{10}$ $T_{2.3}$ G वर्ण्यं (for the second प्रति) — $T_1$ om line 1798 — (L 1798) $D_{10}$ $T_2$ नगा (for तथा) $M_{2.4}$ स्तेषां (for [अ]न्येषां) $D_{10}$ जिह्वागात्र नराणां (for the prior half) — (L 1800) $T_1$ वै (for ते) — (L 1801) $T_1$ नाशने, $G_2$ नाशना (for -नाशका) — (L 1802) $G_{1.3.4}$ भजते (for लभन्ते) — (L 1803) $T_1$ कर्णरोग- (for दन्त°) $G_{1.3}$ $M_4$ दन्तरोगाः शिरोरोगाः (for the prior half) $T_1$ -दन्तरोगास् (for कर्ण°) — (L 1804) $D_{10}$ $T_2$ G दुःखाश्रिता (for मुखा°) $T_1$ अन्ये दुःखाश्रिता रोगाः (for the prior half) — (L 1805) $T_3$ क्लिश्यते (for पीड्यन्ते). — (L 1809) $D_{10}$ $T_2$ G -क्रोधवशा, $T_{1.3}$ °वशाद् (for °युता). — (L 1810) $T_1$ स्वादु (for एव). — $T_1$ om (hapl) the post half of line 1811 and the prior half of line 1812 — (L 1812) $M_4$ अपथ्य (for अभक्ष्य) $D_{10}$ $T_2$ $M_{1.3}$ भक्षदाश्, $G_4$ -भक्षकाश् (for -भक्ष्यदाश्) $G_{1-3}$ अपथ्यभक्षणाश्चैव (for the prior half) $T_1$ om from the post hlaf of line 1813 up to the prior half of line 1815 — (L 1815) $D_{10}$ $T_{2.3}$ $G_4$ -समन्विता, $G_{2.3}$ $M_4$ संयुता (for -पीडिता). $T_1$ व्याधिभिः कुक्षिसंश्रितैः (for the post half) — (L 1816) $T_1$ पीड्यन्ते बहुधा तत्र यथा स्वकृतकर्मभिः — $T_1$ महेशः, $G_2$ शिव (for महेश्वरः) — (L 1820) $G_{1.3}$ -वि (for -प्र) — (L 1821) $T_2$ मे (for च) — $G_2$ om.

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वर ।

ये पुरा मनुजा देवि मांसलुब्धा सुलोलुपाः ।
आत्मार्थं स्वादुगृद्धाश्च परभोगोपतापिनः । [ 1830 ]
अभ्यसूयापराश्चैव परभोगेषु ये नराः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
शोषव्याधियुतास्तत्र नरा धमनिसंतताः ।
भवन्त्येव नरा देवि पापकर्मोपभोगिनः ।

उमा ।

भगवन्मानुषाः केचित्क्लिश्यन्ते कुष्ठरोगिणः । [ 1835 ]
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वर ।

ये पुरा मनुजा देवि परेषां रूपनाशकाः ।
आघातवधबन्धैश्च वृथादण्डेन मोहिताः ।
इष्टनाशकरा ये तु अपथ्याहारदा नराः ।
चिकित्सका वा दुष्टाश्च लोभमोहसमन्विताः । [ 1840 ]
निर्दया प्राणिहिंसायां मलदाश्चित्तनाशकाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
यदि वै मानुषं जन्म लभेरंस्ते सुदुःखिताः ।
अत्र ते क्लेशसंयुक्ताः कुष्ठरोगसमन्विताः ।
केचित्त्वग्दोषसंयुक्ता व्रणकुष्ठैश्च संयुताः । [ 1845 ]
श्वित्रकुष्ठयुता वापि बहुधा कुष्ठसंयुताः ।
भवन्त्येव नरा देवि यथा येन कृतं फलम् ।

उमा ।

भगवन्मानुषाः केचिदङ्गहीनाश्च पङ्गवः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वर ।

ये पुरा मनुजा देवि लोभमोहसमावृताः । [ 1850 ]
प्राणिनां प्राणहिंसार्थमङ्गहीनं प्रकुर्वते ।
शस्त्रेणोत्कृत्य या देवि प्राणिनां चेष्टनाशकाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
अङ्गहीना ये प्रेत्य भवन्त्येव न संशयः ।
स्वभावतो वा जाता वा पङ्गवस्तु भवन्ति ते । [1855]

उमा ।

भगवन्मानुषाः केचिद्ग्रन्थिभिः पिटकैस्तथा ।
क्लिश्यमाना प्रदृश्यन्ते तन्मे शंसितुमर्हसि ।

महेश्वर ।

ये पुरा मनुजा देवि ग्रन्थिभेदकरा नृणाम् ।
मुष्टिप्रहारपरुषा नृशंसाः पापकारिणः ।
पाटकाम्लोदपाश्चैव शूलगुल्मादिभिश्च च । [ 1860 ]
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
ग्रन्थिभिः पिटकैश्चैव क्लिश्यन्ते भृशदुःखिताः ।

उमा ।

भगवन्मानुषाः केचित्पादरोगसमन्विताः ।
दृश्यन्ते सततं देव तन्मे शंसितुमर्हसि ।

महेश्वर ।

ये पुरा मनुजा देवि क्रोधलोभसमन्विताः । [ 1865 ]
मनुजा देवतास्थानं स्वपादैर्भ्रंशयन्त्युत ।
जानुभिः पार्ष्णिभिश्चैव प्राणिहिंसां प्रकुर्वते ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
पादरोगैर्बहुविधैर्बाध्यन्ते श्लीपदादिभिः ।

उमा ।

भगवन्मानुषाः केचिद्दृश्यन्ते बहवो भुवि । [ 1870 ]
वातजैः पित्तजै रोगैर्युगपत्सान्निपातिकैः ।
रोगैर्बहुविधैर्देव क्लिश्यमाना सुदुःखिताः ।

---

( hapl ) lines 1826–1832 — ( L 1825 ) M1–3 चेत्, M4 च ( for ते ) — ( L 1827 ) T3 कासरोगाग्निमियुना ( for the post half ) — ( L 1830 ) D10 अपार्थं स्वादुगर्धाश्च ( for the prior half ) — T1 om line 1831 — ( L 1831 ) T3 [अ]पि ( for [ए]व ) T3 -भोगेषु ( for भोगेषु ) — T1 om. ( hapl ) lines 1833–1842 — ( L 1833 ) T2 G1–3 श्लेष्म- ( for शोष ) — ( L 1835 ) G4 मानुषे ( for °षा ) G1–3 दृश्यते ( for क्लिश्यन्ते ) G2 कर्ण ( for कुष्ठ ) — ( L. 1837 ) D10 T2 G1–3 M3.4 -नाशना ( for °का ) — ( L 1840 ) D10 T3 G1 M4 द्वेषलोभ, T3 दोषलोभ, G4 रोगलाभ ( for लोभमोह- ) G2 द्वेष लोभमदान्विता ( for the post half ) — T3 om ( hapl ) lines 1841–1843 — ( L 1841 ) D10 T2 G नाशना ( for °का ) — ( L 1844 ) T1 यत्र ते, T3 G1 अमूते ( for अत्र ते ) G2 कर्ण ( for कुष्ठ- ) D10 T1.2 G1.2.4 -शतैवृता, T3 -शतैर्युता ( for समन्विता ) — T1 om ( hapl ) lines 1845–1846 G4 om ( hapl ) line 1845 — ( L 1846 ) G2 कृच्छ्र ( for कुष्ठ ) — ( L 1847 ) T1.2 यदा ( for नरा ) T1 येन यत्र ( for यथा येन ) — ( L 1848 ) G1 लोके ( for केचिद् ) — ( L. 1850 ) T3 om ( hapl. ) from the post half up to the prior half of line 1852 T1.2 समन्विता ( for समावृता ) — ( L. 1851 ) D10 T2 G M निम्न ( for -हीन ) — T1 om line 1852 — ( L 1852 ) M1.2 [अ]येन ( for [उ]त्कृत्य ) M1.2 प्राणिनश् ( for °नां ) — ( L 1855 ) D10 G2.4 से ( for तु ) — D10 G1.2 om उमा T1 om line 1860 — ( L 1862 ) T1 स्फोटकैश् ( for पिटकैश् ) T1 दुःख ( for भृश ) — ( L 1861 ) G1 क्लिश्यते ( for दृश्यन्ते ) — T1 om line 1865 — ( L 1866 ) D10 मर्देन ( for मनुजा ) M1.2 देवत ( for देवता ) T2 G2 स्वपदैर् ( for

असमस्तैः समस्तैश्च आढ्या वा दुर्गतास्तथा ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वर ।

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् । [ 1875 ]
ये पुरा मनुजा देवि आसुरं भावमाश्रिताः ।
स्ववशाः कोपनपरा गुरुविद्वेषिणस्तथा ।
परेषां दुःखजनका मनोवाक्कायकर्मभिः ।
छिन्दन्भिन्दंस्तुदंश्चैव नित्यं प्राणिषु निर्दयाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने । [ 1880 ]
यदि वै मानुषं जन्म लभेरंस्ते तथाविधाः ।
तत्र ते बहुभिर्घोरैस्तप्यन्ते व्याधिभिः प्रिये ।
केचिच्छ्लीपदसंयुक्ताः केचित्कासमन्विताः ।
ज्वरातिसारतृष्णाभिः पीड्यमानास्तथापरे ।
वातगुल्मैश्च बहुभिः शोफोदरसमन्विताः । [ 1885 ]
पादरोगैश्च विविधैर्व्रणकुष्ठभगंदरैः ।
आढ्या वा दुर्गता वापि दृश्यन्ते व्याधिपीडिताः ।
एवमात्मकृतं कर्म भुञ्जते तत्र तत्र वै ।
गूहितुं न च शक्यं वै केनचित्स्वकृतं फलम् ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि । [ 1890 ]

Colophon

उमा ।

भगवन्देवदेवेश भूतपाल नमोऽस्तु ते ।
ह्रस्वाङ्गाश्चैव वक्राङ्गाः कुब्जा वामनकास्तथा ।
अपरे मानुषा देव दृश्यन्ते कुणिबाहवः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वर ।

ये पुरा मनुजा देवि लोभमोहसमन्विताः । [ 1895 ]
धान्यमानान्विकुर्वन्ति क्रयविक्रयकारणात् ।
तुलादोषं तथा देवि घृतमानेषु नित्यशः ।
अर्घापकरणं चैव सर्वेषां क्रयविक्रये ।
अङ्गदोषकरा ये तु परेषां कोपकारणात् ।
मांसादाश्चैव ये मूर्खा भयशावहया सदा । [ 1900 ]
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
ह्रस्वाङ्गा वामनाश्चैव कुब्जाश्चैव भवन्ति ते ।

उमा ।

भगवन्मानुषाः केचिद्दृश्यन्ते मानुषेषु वै ।
उन्मत्ताश्च पिशाचाश्च पर्यटन्तो यतस्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि । [ 1905 ]

महेश्वर ।

ये पुरा मनुजा देवि दर्पाहंकारसंयुताः ।
बहुधा प्रलपन्त्येव प्रहसन्ति परान्भृशम् ।
मोहयन्ति परान्भोगैर्मदनैर्लोभकारणात् ।
वृद्धान्गुरूंश्च ये मूर्खा वृथैवापहसन्ति च ।
शौण्डा विदग्धाः शास्त्रेषु तथैवानृतवादिनः । [ 1910 ]
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
उन्मत्ताश्च पिशाचाश्च भवन्त्येव न संशयः ।

उमा ।

भगवन्मानुषाः केचिन्निरपत्याः सुदुःखिताः ।
यतन्तो न लभन्त्येव अपत्यानि यतस्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि । [ 1915 ]

---

स्वपादैर्) G3 न्यश्यति (for अशयन्ति) — G2 om from the post. half of line 1867 up to the prior half of line 1868 —(L 1870) T1 क्लिश्यते (for दृश्यन्ते) G1-3 बहुधा (for बहवो) T1 भृश, G4 [s]पि च (for भुवि) —(L 1872) T3 रोगैश्च बहुभिर्देव (for the prior half) — T1 om line 1873 —(L 1876) T2 G4 स्वासुर (for आ°) M आश्रिता (for आश्रिता°) —(L 1877) D10 T2 G2.4 -विद्वेषगास् (for °षिणस्) —(L 1879) M3 देवि (for एव) — T1 om lines 1881 and 1883 —(L 1883) G1.3 वातादि- (for श्लीपद-) — G2 om. (hapl) lines 1884–1885 —(L 1885) D10 पाद-, G4 पद- (for वात). T3 पित्तैश् (for -गुल्मैश्) T1 वातजैर्बहुभिः क्लेशैः (for the prior half) D10 श्लेष्मरोग-, T3 M4 शोफोदर-, G1.3 श्लेष्मरोग (for शोफोदर-) T2 श्लेष्मोदर-समासिता (for the post half) —(L 1886) T2 G2 वात (for पाद) G4 बहुभिर् (for विविधैर्) T1 पादरोगैर्बहुविधैर् (for the prior half) G4 प्रच्छर्दिक- (for व्रणकुष्ठ) —(L 1888) D10 T1.2 G4 M1-3 ते (for वै) —(L 1889) D10 T3 G4 M4 ग्रहीतु (for गूहितु) T2 G1-3 अभिभूत (G1 धातु) न शक्य हि (for the prior half) —(L 1890) D10 G1.2 भूय श्रोतु किमिच्छसि (for the post half) — Colophon *Sub parvan* D10 दानधम — *Adhy name* D10 T3 G2 M1-3 उमामहेश्वरसंवाद — *Adhy no* D10 T2.3 G2.4 203, T1 G1.3 M1 197, M2.3 198, M4 195 — T1 om महेश्वर —(L 1898) D10 T2.3 G2-4 अर्घापकरणाच्चै (G3 °ण चै) व (for the prior half) —(L 1899) G2 -दोषपरा (for -दोषकरा) —(L 1902) M1-3 कुण्ठगा (for ह्रस्वाङ्गा) M1-3 ह्रस्वाङ्गाश्च (for कुब्जाश्चैव) —(L 1904) D10 T3 G M4 पर्यटने —(L 1906) T2 नरा (for -मनुजा) T1 लोभमोहसमन्विता (for the post half) —(L 1907) D10 T G हसति च (for प्रहसन्ति) —(L 1909) T1 तथा (for वृथा). —(L 1910) G1.2 M सदा (for तथा) — G2 om (hapl) lines 1912–1920 —(L 1913) G1.3 अनपत्य (for निर°) M1-3 दृश्यन्ते निरपत्यका (for the post half) —(L 1916) T3 मानुषा (for मनुजा).

महेश्वर ।

ये पुरा मनुजा देवि सर्वप्राणिषु निर्दया ।
घ्नन्ति बालाश्च भुञ्जन्ते मृगाणां पक्षिणामपि ।
गुरुविद्वेषिणश्चैव परपुत्राभ्यसूयका ।
पितृपूजां न कुर्वन्ति यथोक्तं चाष्टकादिभिः ।
एवंयुक्तसमाचारा पुनर्जन्मनि शोभने । [1920]
मानुष्यं सुचिरात्प्राप्य निरपत्या भवन्ति ते ।
पुत्रशोकयुता वापि नास्ति तत्र विचारणा ।

उमा ।

भगवन्मानुषा केचित्प्रदृश्यन्ते सुदुःखिताः ।
उद्वेगवासनिरता सोद्वेगाश्च यतस्ततः ।
नित्यशोकसमाविष्टा दुर्गताश्च तथैव च । [1925]
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वर ।

ये पुरा मनुजा नित्यमुत्कोचनपरायणा ।
भीषयन्ति पराक्षिप्य विकुर्वन्ति तथैव च ।
ऋणवृद्धिं च ये कृत्वा दरिद्रेभ्यो यथेष्टतः ।
ऋणार्थमभिगच्छन्ति सततं वृद्धिरूपका । [1930]
उद्विजन्ते हि यान्दृष्ट्वा धारकास्स्वय कारणात् ।
अतिवृद्धिर्न कर्तव्या दरिद्रेभ्यश्च धर्मतः ।
ये वने क्रीडमानाश्च त्रासयन्ति वने मृगान् ।
प्राणिहिंसा तथा देवि कुर्वन्ति च यतस्ततः ।
येषां गृहेषु वै श्वानस्त्रासयन्ति वृथा नरान् । [1935]
एवंयुक्तसमाचारा कालधर्मगता पुनः ।
पीडिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
कथंचित्प्राप्य मानुष्यं तत्र ते दुःखसंयुता ।
कुदेशे दुःखभूयिष्ठे व्याघातशतसंकुले ।
जायन्ते तत्र शोचन्त सोद्वेगाश्च यतस्ततः । [1940]

उमा ।

भगवन्मानुषाः केचिदैश्वर्यस्थानसंयुताः ।
म्लेच्छभूमिषु दृश्यन्ते म्लेच्छैश्वर्यसमन्विताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वर ।

ये पुरा मनुजा देवि धनधान्यसमन्विताः ।
अयथावत्प्रयच्छन्ति श्रद्धावर्जितमेव वा । [1945]
अपात्रेभ्यश्च ये दानं शौचमङ्गलवर्जिताः ।
ददत्येव च ये मूर्खा श्लाघयावज्ञयापि वा ।
एवंयुक्तसमाचारा पुनर्जन्मनि शोभने ।
कुदेशे म्लेच्छभूयिष्ठे दुर्गमे घनसंकटे ।
म्लेच्छाधिपत्यं सम्प्राप्य जायन्ते तत्र तत्र वै । [1950]

उमा ।

भगवन्भगनेत्रघ्न मानुषेष्वेव केचन ।
क्लीबा नपुंसकाश्चैव दृश्यन्ते पण्डकास्तथा ।
नीचकर्मरता नीचा नीचसौख्यास्तथा भुवि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ।

महेश्वरः ।

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् । [1955]
ये पुरा मनुजा भूत्वा घोरकर्मरतास्तथा ।
पशुपुंस्त्वोपघातेन जीवन्ति च रमन्ति च ।
पुंस्त्वोपघातिनश्चैव नराणां कोपकारणात् ।
ये धूर्ताः स्त्रीषु गच्छन्ति अयथावद्यथेष्टतः ।
कामविघ्नकरा ये तु द्वेषपैशुन्यकारणात् । [1960]

---

—(L. 1917) M1 अघ्नन् (for घ्नन्ति) —(L. 1921) T3 सुचिर (for °रात्) —(L. 1922) D10 T2 G च (for वा) — After line 1922, G1 3 ins

तादृशास्तु नरा देवि पुनर्जन्मनि दुःखिता ।
भोगसौख्यं न विन्दन्ति नास्ति तत्र विचारणा ।
उमा ।
भगवन्मानुषा केचित्कुकलत्रप्रपीडिता ।
कलत्रवन्तोऽपि सुखं नाप्नुवन्ति कदाचन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि । [5]
महेश्वर ।
मनुजा देवि दम्पत्योर्भेदकाश्च शठास्तथा ।
स्वपत्नीं वर्जयित्वा च पुंश्चल्यां निरता शुभा ।

—(L. 1923) T1 दृश्यतेनात्र दुःखिता (for the post half) —(L. 1924) D10 T2 G यतव्रता, T1 3 ततस्तत (for यतस्ततः) —(L. 1925) T2 G1-3 नित्य (for नित्य). T1 दुर्भगाश्च (for दुर्गताश्च) —T1 om lines 1927–1928. —(L. 1929) D10 T2 G ऋणवृद्धिकराश्चैव, T1 ऋण-वृद्धिपरा कृत्वा (for the prior half) —(L. 1930) T1 अपि, G1 3 अप- (for अभि-) T3 -पूर्वक, M1 (also as above) -सूचका (for -रूपका) —(L. 1931) D10 G2 स्वार्थ-, T1 ऋण-, T2 3 G1 3 M1 स्वयं- (for स्वय) —(L. 1932) D10 T2 G यथेष्टतः (for च धर्मतः). —T1 om line 1934 —(L. 1936) D10 T1 G कालधर्म, T2 °धर्मे (for °धर्म-) T3 ततः (for पुनः). —(L. 1941) D10 T G2-4 ग्राम- (for -स्थान-) —(L. 1945) M1-3 यशोर्थं कुरुते धर्मं (for the prior half). —(L. 1947) T1 दानं (for मूर्खा) —(L. 1951) D10 T3 G च (for [ए]व) —(L. 1952) T1 om from the post. half up to the prior half of line 1953 D10 T2 3 G M1 4 पडकाश्च (for पण्ड°) —(L. 1953) T2 नित्य (for नीचा) —T1 om line 1955 —(L. 1959) T2 तेषु (for स्त्रीषु) T1 ये चापि स्त्रीषु गच्छति कामव्यसनकारणात् —(L. 1960) D10 T2 3 G2 कालधर्मगतास्तु ते, G1 3, 4 कालधर्मं गतास्तु

एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
दण्डिता यमदण्डेन निरयस्थाश्चिर प्रिये ।
यदि चेन्मानुष जन्म लभेरंस्ते तथाविधा ।
क्लीवा वर्षवराश्चैव पण्डकाश्च भवन्ति ते ।
नीचकर्मरता लोके निर्लज्जा वीतसभ्रमा । [ 1965 ]
परनिन्दा पुरस्कृत्य ते भवन्ति स्वकर्मणा ।
यदि चेत्सविमृश्येरंस्ते मुच्यन्ते हि किल्बिषात् ।
तत्रापि ते प्रमाद्येयु पतन्ति नरकालये ।
स्त्रीणामपि तथा देवि यथा पुसा तु कर्मजम् ।
इति ते कथित देवि भूय श्रोतु किमिच्छसि । [ 1970 ]

Colophon

उमा ।

भगवन्देवदेवेश शूलपाणे वृषध्वज ।
पुश्चल्य इति या स्त्रीषु नीचवृत्तरता स्मृता ।
केन कर्मविपाकेन तन्मे शसितुमर्हसि ।

महेश्वर ।

या पुरा प्रमदा देवि बुद्धिमोहसमन्विता ।
कामरागसमायुक्ता पतीनपचरन्ति वै । [ 1975 ]
प्रतिकूलपरा यास्तु पतीन्प्रति यथा तथा ।
शौच लज्जा तु विस्मृत्य यथेष्टपरिचारका ।
एवयुक्तसमाचारा यमलोके सुदण्डिता ।
यदि चेन्मानुष जन्म लभेरस्तास्तथाविधा ।
बहुसाधारणा एव पुश्चल्यश्च भवन्ति ता । [ 1980 ]
पौंश्चल्य यत्तु तद्वृत्त स्त्रीणां कष्टतम स्मृतम् ।
ततःप्रभृति ता देवि पतन्त्येव न सशय ।
शोचन्ति चेत्तु तद्वृत्तं मनसा हितमाप्नुयु ।

उमा ।

भगवन्देवदेवेश प्रमदा विधवा भृशम् ।
दृश्यन्ते मानुषे लोके सर्वकल्याणवर्जिता । [ 1985 ]
केन कर्मविपाकेन तन्मे शसितुमर्हसि ।

महेश्वर ।

या पुरा प्रमदा देवि बुद्धिमोहसमन्विता ।
कुटुम्ब तत्र वै पत्युर्नाशयन्ति वृथा तथा ।
विषदाश्चाग्निदाश्चैव पतीन्प्रति सुनिर्दया ।
अन्यासां हि पतीन्यान्ति स्वपतिद्वेषकारणात् । [ 1990 ]
एवयुक्तसमाचारा यमलोके सुदण्डिता ।
निरयस्थाश्चिर काल कथचित्प्राप्य मानुषम् ।
तत्र ता भोगरहिता विधवास्तु भवन्ति वै ।

उमा ।

भगवन्प्रमदास्त्वन्या पतौ ज्ञातिषु सत्स्वपि ।
लिङ्गिन्य सप्रदृश्यन्ते पाषण्ड धर्ममाश्रिता । [ 1995 ]
केन कर्मविपाकेन तन्मे शसितुमर्हसि ।

महेश्वर ।

या पुरा भावदोषेण लोभमोहसमन्विता ।
परद्रव्यपरा लोभात्परेषा द्रव्यहारका ।
अभ्यसूयापरा यास्तु सपत्नीना प्रदूषका ।
ईर्ष्यापरा कोपनाश्च बन्धूना विफला सदा । [ 2000 ]
एवयुक्तसमाचारा पुनर्जन्मनि ता प्रिये ।

---

ते ( for the post half ) — ( L 1964 ) T1 नपुसकाश्च ( for वर्षवराश्च ) G पडकाश्च ( for पण्डकाश्च ) T1 नीचकर्मरतास्तथा ( for the post half ) — ( L 1965 ) T2 परा, M1.2 करा ( for रता ) T1 नीचसौरया निकृष्टाश्च ( for the prior half ) — T1 om lines 1966–1969 — ( L 1966 ) D10 T2 G1 2 4 परान्दीनान्विहिस्कृत्य ( for the prior half ) M भवति ( for भवन्ति ) — ( L 1967 ) D10 T2 3 G2 सप्रपश्येरस्, G1 2 4 M4 सप्रदृ° ( for सविमृ° ) D10 T2 3 G4 कल्मषात् ( for किल्बिषात् ) — ( L 1968 ) D10 T3 G4 अत्र ( for तत्र ) G1-3 पतति निरये पुन ( for the post half ) — ( L 1969 ) T2 om ( hapl ) the post half and the prior half of line 1970 T2 प्रकीर्तित ( for तु कर्मजम् ) — G2 om line 1970 — ( L 1970 ) T1 भवति मनुजा देवि ( for the prior half ) G1 3 4 किं भूय श्रोतुमिच्छसि ( for the post half ) — Colophon *Sub-parvan* M1-3 दानधर्म — *Adhy name* D10 T2 3 G2 उमामहेश्वरसंवाद — *Adhy no* D10 T2 3 G2 4 204, T1 G1 3 M1.2 198, M3 199, M4 196 — ( L 1972 ) D10 T2 G इव ( for इति ) D10 T G1-3 M वृत्ति- ( for -वृत्त ) — T1 om line 1974 — ( L 1974 ) D10 T2 3 M4 मनुजा ( for प्रमदा ) — ( L 1975 ) T1 transp the prior half and the post half G2 om from the post half up to the post half of line 1978 D10 T G1 2 4 अति, M1 4 अव ( for अप ) —( L 1977 ) D10 T G1 3 4 परिचारणा ( for °चारका ) — ( L 1979 ) D10 T2 3 G वै ( for चेत् ) T2 3 G2 M4 ते ( for तास् ) G1-3 यथा तथा ( for तथाविधा ) — T1 om lines 1981–1982 — G4 om the ref — ( L 1985 ) D10 G2 4 मानुषा ( for °षे ) — ( L 1987 ) D10 T2 3 G M4 मनुजा, T1 तु सदा ( for प्रमदा ) — ( L 1988 ) T1 स्त्रिय, G4 यथा ( for तथा ) — ( L 1990 ) T1 अन्यमेव पति यान्ति ( for the prior half ) — T1 om ( hapl ) lines 1994–2003 — ( L 1994 ) D10 T2 3 G लोके ( for त्वन्या ) G1 3 4 पत्यौ ( for पतौ ) D10 T2 3 G न ( for [अ]पि ) — ( L 1995 ) D10 G4 पाषण्डमतमाश्रिता ( for the post half ) — ( L 1998 ) D10 T2 G4 M4 हरा ( for परा ) G1 3 परद्रव्याभिलोभाच्च ( for the prior half ) — ( L 2001 )

